# अथाथर्ववेदीयप्रश्नोपनिषत्प्रारम्भः

इयं प्रश्नोपनिषदन्वर्थनामाऽस्ति । अस्यां षट् प्रश्नास्तेषामुत्तराणि च तत्र तत्र वर्णितानि । प्राद्यकण्डिकायां षड्ऋषयः प्रष्टारः परिगणितास्ते-ष्वेकैकेन पृष्टे षड्विधान्युत्तराणि पिप्पलादेन प्रतिपादितानि विशेषस्तत्र तत्र वक्ष्यते ॥

भाषार्थः- यह उपनिषद् अथर्ववेद सम्बन्धी है इस में छः प्रश्न और उन के उत्तर वहां २ कहे हैं इस लिये इस का प्रश्न नाम सार्थक है पहिली कण्डिका में भारद्वाजादि छः ऋषि पूछने वाले उद्यत हुये गिनाये हैं उन में से एक २ के पूछने पर पिप्पलाद महर्षि ने छः प्रकार के उत्तर कहे हैं यही इस में विषय है विशेष व्याख्यान वहां २ किया जायगा ॥

सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्य्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परंब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः १

सुकेशा । च । भारद्वाजः । शैब्यः । च । सत्यकामः । सौर्यायणी । च । गार्ग्यः । कौशल्यः । च । आश्वलायनः । भार्गवः । वैदर्भिः । कबन्धी । कात्यायनः । ते । ह । एते । ब्रह्मपराः । ब्रह्मनिष्ठाः । परम् । ब्रह्म । अन्वेषमाणाः । एषः । ह । वै । तत् । सर्वम् । वक्ष्यति । इति । ते । ह । समित्पाणयः । भगवन्तम् । पिप्पलादम् । उपसन्नाः ॥१॥

अ०—(भारद्वाजः) भरद्वाजस्यापत्यम्। ऋष्यण्। (सुकेशा)(च) इति नामकः(शैव्यः) शिवेरपत्यमिति क्षत्रियगोत्रवृद्धेत्कोसलाजादाञ्ञ्यङ्, इति सूत्रेण ञ्यङ् (सत्यकामः, च) इति नामकः (सौर्यायणी) सौर्यस्य युवापत्यमिति फिञ् सौर्यायणिः। छान्दसत्वाद्दीर्घः(गार्ग्यः)(च)इति नामको गर्गगोत्रीयः (आश्वलायनः)अश्वलस्यापत्यम्। (कौशल्यः)(च) इति नामकः (भार्गवः) भृगुगोत्रस्थः (वैदर्भिः) विदर्भेः पुत्रः (च) एतन्नामकः(कात्यायनः)कत्यस्यापत्यम् (कवन्धी) एतन्नामकः (ते,ह) प्रसिद्धास्तपस्विनः(एते)षट् (ब्रह्मपराः) ब्रह्मैव परं येषाम् (ब्रह्मनिष्ठाः)ब्रह्मप्राप्तौ निष्ठोत्कण्ठा येषाम् (परम्) इन्द्रियादिभ्यो दूरम्(ब्रह्म)बृहद्व्यापकमात्मतत्त्वम् (अन्वेषमाणाः) (एषः,ह) प्रसिद्धोऽयमाचार्यः (वै) निश्चयेन ( तत्, सर्वम् ) आत्मस्वरूपमस्मभ्यम् (वक्ष्यति,इति)मत्वा (समित्पाणयः) समिधः पा-

शिषु येषाम् (ते) सुकेशादयः (भगवन्तम्) पूज्यं गुरुम् (पिप्पलादम्) (उपसन्नाः) प्रष्टुं समीपं जग्मुः ॥

भावार्थः—स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुत्यन्तरादवगम्यते नैत्यकाग्निहोत्रार्थं समिधां प्रयोजनमवगम्य तासां समर्पणमस्ति न तु नियमोऽस्ति समिध एव समर्पणीया इति किन्तु सहजजनसमागमाय गच्छता तादृशं गुरोर्धर्मकृत्यसाधकं प्रियमभीष्टं वा सुखप्रदं वस्तु गृहीत्वा गन्तव्यं यत्तस्य मान्यत्वं स्थिरतमं स्यात्। यथाऽत्र गुरुसम्बन्धादेवाधिकारी शिष्यो ब्रह्म ज्ञातुं शक्तः तएव महाज्ञं पिप्पलादं ब्रह्मज्ञानप्राप्तये सुकेशादयो गतवन्त इति ॥१॥

भाषार्थः—(भारद्वाजः) भरद्वाज गोत्री (सुकेशा) सुकेशा १ (शैब्यः) क्षत्रिय गोत्री शिविकापुत्र (सत्यकामः) सत्यकाम २ (सौर्य्यायणी) सूर्य का पुत्र (गार्ग्यः) गार्ग्य गर्ग गोत्री ३ (आश्वलायनः) अश्वल का पुत्र (कौसल्यः) कौशल्यनामी ४ (भार्गवः) भृगुगोत्री (वैदर्भिः) विदर्भ का पुत्र वैदर्भि ५ (कात्यायनः) कत्य का पुत्र (कबन्धी) कबन्धी ६ (ह. वै) ये प्रसिद्ध तपस्वी (एते) ये छः (ब्रह्मपराः) सब से परे ब्रह्म को मानने और (ब्रह्मनिष्ठाः) ब्रह्म की प्राप्ति में उत्कण्ठा रखने वाले (परम्) इन्द्रियादि से परे (ब्रह्म) सर्वव्यापक आत्मतत्त्व का (अन्वेषमाणाः) खोज करते हुए (एषः ह) ये प्रसिद्ध आचार्य पिप्पलाद जी (वै) निश्चय कर (तत्, सर्वम्) उस सब आत्मस्वरूप को हमारे लिये (वक्ष्यति, इति) कहेंगे ऐसा मान कर (समित्पाणयः) हाथों में स-

मिधा लिये हुए (ते) वे सुकेशादि छः ऋषि (भगवन्तम्) पूज्य गुरु (पिप्पलादम्) महर्षि पिप्पलादि जी के पास (उपसन्नाः) पूछने को गये ॥

भा०-एक श्रुतिमें आज्ञा है कि जिस को ब्रह्मज्ञान की उत्कण्ठा हो वह हाथमें समिधा लेकर वेदवेत्ता ब्रह्मज्ञानी आचार्य गुरुके पास जावे क्योंकि वैदिकधर्मनिष्ठ ऋषियों को नित्य के अग्निहोत्र में समिधाओंका काम अधिक पड़ता था इस कारण समिधोंका समर्पण लिखाहै किन्तु यह नियम नहींहै कि बड़ों के पास समिधाही लेकर जावे किन्तु यह नियम अवश्यहै कि किसी मान्यपुरुष से मिलनेको जावे तब कोई ऐसा पदार्थ लेता जावे जो उस के धर्म कृत्य का साधन हो वा उस को अधिक सुखदायक अभीष्ट वा प्रिय हो । ऐसे गुरु के सम्बन्ध से अधिकारी शिष्य ब्रह्म को जान सकता है इसी कारण ब्रह्मज्ञान की प्राप्तिके लिये सुकेशादि छः ऋषिजन ब्रह्मज्ञानी पिप्पलाद गुरु के समीप ब्रह्मज्ञान का उपदेश सुनने को गये ॥१॥

**तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान् पृच्छथ यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥**

तान् । ह । सः । ऋषिः । उवाच । भूयः । एव । तपसा । ब्रह्मचर्येण । श्रद्धया । संवत्सरम् । संवत्स्यथ । यथाकामम् । प्रश्नान् । पृच्छथ । यदि । विज्ञास्यामः । सर्वम् । ह । वः । वक्ष्यामः । इति ॥२॥

अ०—पिप्पलादस्तेषां हार्दं बुद्ध्वा पात्रत्वे न्यूनत्वमालोक्येदमाह:—(तान्) सुकेशादीन्(ह)(सः) पिप्पलादः (ऋषिः,उवाच) यूयम् (भूयः, एव) पुनरपि (तपसा) (श्रद्धया,ब्रह्मचर्येण)च सार्द्धम् (संवत्सरम्) (संवत्स्यथ) तावन्मत्निकटे निवत्स्यथ तदनन्तरम् । (यथाकामम्) यथाभिलापम् (प्रश्नान्)(पृच्छथ)(यदि) वयम् (विज्ञास्यामः)(सर्वम्, ह) (वः) युष्मभ्यम् (वक्ष्यामः) उपदेक्ष्यामः ॥

भा०—यद्यपि कृततपसोऽनुष्ठितब्रह्मचर्याश्रमाः सुकेशादयस्तथापि पिप्पलादेन स्वसामीप्ये श्रद्धया गुरुं शुश्रूषितुं तपोऽनुष्ठातुं चाज्ञप्ता येन तेषां पूर्णाधिकारित्वं ब्रह्मज्ञानाय श्रद्धा च परीक्षिता स्यादिति। यदि शब्दोऽत्रात्मश्लाघादोषनिवृत्त्यर्थो न तु ज्ञानसन्देहार्थः। यथाकाममित्यादेर्यो यत्स्वाभीष्टं प्रष्टुमिच्छति तस्मै तदुपदेक्ष्याम इति तात्पर्यम्॥२॥

भावार्थः—पिप्पलाद ऋषि उन का अभिप्राय जान के पूर्ण अधिकारी होने में कुछ न्यूनता देख कर यह बोलेः-(तान्, ह) उन सुकेशादि ऋषियोंसे (ह, सः) वे प्रसिद्ध ज्ञानी पिप्पलाद (ऋषिः) ऋषि (उवाच) बोले कि तुम (भूयः, एव) फिर भी (तपसा) तप (श्रद्धया) श्रद्धा (ब्रह्मचर्येण) और ब्रह्मचर्य आश्रमके साथ (संवत्सरम्) एक वर्ष भर (संवत्स्यथ) मेरे समीप निवास करो पीछे (यथाकामम्) अपनी २ इच्छा के अनुसार (प्रश्नान्)

प्रश्नोंको (पृच्छत) पूछो (यदि) जो हम (विज्ञास्यामः) जानते होंगे तो (सर्वं ह) सभी (वः) तुमसे (वक्ष्यामः) उपदेश करेंगे ॥

भावार्थः-यद्यपि सुकेशादि ऋषि ब्रह्मचर्य आश्रम और तप का अनुष्ठान किये हुए थे तो भी पिप्पलाद महर्षि ने अपने समीप श्रद्धा से गुरु की शुश्रूषा और तप का तनुष्ठान करने के लिये आज्ञा दी जिससे उनका पूर्ण अधिकारी होना और ब्रह्मज्ञानके लिये श्रद्धाकी परीक्षा होजावे। यदि जानतें होंगे इस कथन का अभिप्राय अपनी प्रशंसा न समझी जाना है किन्तु जानने में सन्देह नहीं। यथाकाम इस लिये कहा कि जो जिस को पूछना अभीष्ट हो वैसा पूछना सो कहेंगे ॥२॥

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ। भगवन्! कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥**

अथ । कबन्धी । कात्यायनः । उपेत्य । पप्रच्छ । भगवन् । कुतः । ह । वै । इमाः । प्रजाः । प्रजायन्ते । इति ॥३॥

अ०–( अथ ) संवत्सरानन्तरम् ( कबन्धी ) कबन्धीनामकः (कात्यायनः) कत्यस्यापत्यम् (उपेत्य ) पिप्पलादसमीपमागत्य ( पप्रच्छ ) (ह,वै) पूर्ववृत्तस्मरणार्थौ निपातौ (इमाः प्रजाः) ब्राह्मणाद्याः ( कुतः ) ( प्रजायन्ते ) उत्पद्यन्ते ॥

भा०—यस्मादिदं जगदुत्पद्यते तदभिन्ननिमित्तोपादानकारणं भवता वक्तव्यमेतेन यदि किमप्यस्ति तर्हि तदेव सर्वकर्तृ सर्वमूलमात्मतत्त्वं

विज्ञास्यामि इति कात्यायनस्याशयः ॥३॥

भावार्थ—(अथ) अब एक वर्ष आज्ञानुसार श्रद्धापूर्वक ब्रह्मचर्यके साथ ऋषियोंने तप और गुरुकी सेवा करके पश्चात् उन छः में से (कात्यायनः) कत्यके सन्तान (कबन्धी) कबन्धीनामक ऋषिने (उपेत्य) पिप्पलादके समीप जाकर (पप्रच्छ) पूछा कि हे (भगवन्) पूजनीय गुरो ! (ह, वै) पहिले सृष्टि होनेके समय का हाल स्मरण करके कहिये कि ( इमाः ) ये प्रत्यक्ष वर्त्तमान (प्रजाः) ब्राह्मणादि प्रजा (कुतः) किससे (प्रजायन्ते) उत्पन्न हुई हैं ॥

भा०—जिस से यह जगत् हुआ है उस निमित्त तथा उपादान रूप एक कारण को आप कहिये इस कथन से यदि कोई सृष्टिकर्त्ता है तो उसी को सब का मूल आत्मतत्त्व जानेंगे यह कात्यायन का अभिप्राय है ॥३॥

**तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥**

तस्मै । सः । ह । उवाच । प्रजाकामः । वै । प्रजापतिः । सः । तपः । अतप्यत । सः । तपः । तप्त्वा । सः । मिथुनम् । उत्पादयते । रयिम् । च । प्राणम् । च । इति । एतौ । मे । बहुधा । प्रजाः । करिष्यतः । इति ॥

भा०—(तस्मै) एवम्पृच्छते कात्यायनाय (सः)

पिप्पलादः (ह, उवाच) प्रकटमुक्तवान् (वै) यदा (प्रजाकामः)प्रजाः सृजेयेति स्वाभाविकाभिलाषायुक्तः (प्रजापतिः) चराचरस्य स्वामी तदा (सः) (तपः)(अतप्यत) कथमिमाः प्रजाः सृजेयेत्यन्वीक्षणतत्परः समाधिस्थइव सर्वं रचनप्रकारमालोचितवान् (सः) (मिथुनम्) द्वन्द्वम् (उत्पादयते) उत्पादितवान्। किन्तन्मिथुनम् (रयिम्, च) भोग्यम् (प्राणम्,च) भोक्तारम् (मे) मम सृष्टौ (इत्येतौ)भोग्यभोक्तारौ(बहुधा)(प्रजाः)(करिष्यति)(इति)॥

भावार्थः—यद्यपि परमात्मन्यस्मदादिवदिच्छागुणो नोस्ति तथापि सर्गारम्भे स्वाभाविकी सिसृक्षोद्भूयतएव तदानीं स स्वात्मन्येवेक्षते तस्मादीक्षणापूर्विकेयं सृष्टिरिति विद्वद्भिर्निश्चीयते। पूर्वं स्वसृष्टौ स द्वौ भेदावुत्पादयति शक्तिद्वयं भिनत्ति। भोग्यं भोक्ता स्त्री पुरुषः प्रकृतिः पुरुषो जडं चेतनं सूर्यश्चन्द्रमा इत्यादि नामकं द्वन्द्वमादौ करोति तस्मादेव सर्वा विविधा सृष्टिः सुगमतयोत्पद्यते ४

भाषार्थः—(तस्मै) उस पूछनेवाले कबन्धी कात्यायनके लिये (सः) वे पिप्पलाद (ह) प्रकट (उवाच) बोले कि (वै) जब (प्रजापतिः) चराचर जगत्का स्वामी (प्रजाकामः) मैं प्रजाको रचूं ऐसी

स्वाभाविक इच्छा से युक्त होता तब (सः) वह (तपः) आन्तर्य विचार से (अतप्यत) किस प्रकार इस प्रजा को रचूं जिससे ठीक २ नियमपूर्वक सब काम चले ऐसा ध्यान करता है (सः) वह (तपः) (तप्त्वा) ध्यान करके (सः) वह (मिथुनम्) दो सहयोगी वस्तुओं को (उत्पादयते) रचता है (रयिञ्च) भोग्य और (प्राणम्, च) भोक्ता कि (इत्येतौ) ये दोनों (मे) मेरी सृष्टि में (बहुधा) बहुत प्रकार की (प्रजाः) प्रजा को (करिष्यतः) करेंगे (इति) ऐसा विचार कर ॥

भा०—यद्यपि परमात्मा हम लोगों के तुल्य इच्छा गुणवाला नहीं है तो भी सृष्टि के आरम्भ में रचना की इच्छा स्वाभाविक प्रकट होती उस समय वह अपने स्वरूप में विचार करता है इस लिये विचारपूर्वक सृष्टि हुई ऐसा विद्वान् लोग मानते हैं। पहिले अपनी सृष्टि में उसने दो भेद किये जैसे-अग्नि सोम। भोग्य, भोक्ता। स्त्री,पुरुष। जड़,चेतन इत्यादि नामवाले दो भेद किये कि इन से विविध प्रकार की सृष्टि सुगमता से उत्पन्न होगी ॥४॥

## आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः। रयिर्वा एतत्सर्वं यन्मूर्त्तं चामूर्त्तं च तस्मान्मूर्त्तिरेव रयिः ॥ ५ ॥

आदित्यः। ह। वै। प्राणः। रयिः। एव। चन्द्रमाः। रयिः। वै। एतत्। सर्वम्। यत्। मूर्त्तम्। च। अमूर्त्तम्। च। तस्मात्। मूर्त्तिः। एव। रयिः ॥ ५ ॥

अ०—अथ तयोर्भोग्यभोक्त्रोः साधर्म्यवैधर्म्यदर्शनपुरस्सरं सकारणौ व्याख्यातुमारभते (ह,वै) प्रसिद्धो हि (आदित्यः) कालविभागेन सर्ववस्तुन आयुराददानो याति स सूर्यः (प्राणः) प्राणरक्षानिमित्तत्वात्प्राणशब्दवाच्यः (रयिः,एव) धनाद्धै-

र्य्यस्य निमित्तत्वाद्रयिशब्दवाच्यः (चन्द्रमाः) मनस आह्लादकः। भोक्तृभोग्यशक्त्योः प्राधान्येनोत्तेजकौ प्रधानौ निमित्तौ तावन्तरेण तयोः शक्त्योरसत्त्वात्तावेव प्राणरयिशब्दवाच्याविति भेदो दर्शितः। अथवा (एतत्, सर्वम्) (यत्) (मूर्त्तम्, च) स्थूलम् (अमूर्त्तम्,च) सूक्ष्मम्। भोक्तृभोग्यरूपं तत् (रयिर्वै) भोग्यमेवास्ति। भोक्ताऽपि भोग्यत्वमापद्यते (तस्मात्) शक्तिद्वयस्य चैकात्म्यात् (रयिः) भोग्यम् (मूर्त्तिरेव) स्थूलमेव। अर्थादमूर्त्तं सूक्ष्ममपि भोग्यं स्थूलत्वमापद्यते यद्वा कार्यस्थूलजगदपेक्षया तद्भोग्यं सूक्ष्मं भोक्तृपुरुषापेक्षया तु स्थूलमेव यतो हि भोक्तृपुरुषात्परमन्यत्सूक्ष्ममेव नास्ति। अतःप्रजापतिरेव भोग्यभोक्तृस्थूलसूक्ष्मरूपोऽस्ति विवक्षापरो भेदः॥

भा०—आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति मनुप्रामाण्यात्परम्परया भोक्तृणां स्थितावादित्यएव परमं निमित्तम्। भोक्तृचेष्टायाः प्रवर्द्धकः सूर्योऽतएव रात्रौ तस्याः शैथिल्यम्। स्त्री भोग्यप्रधाना भोग्यशक्तिवर्द्धकश्चन्द्रमाः। अतएव प्रमदानां कामो रात्रौ चन्द्रसङ्गाद्विवर्द्धते चन्द्रेण च ता उपमीयन्ते। भोक्तृपुरुषशक्तिप्रधानो वर्द्धकश्च सूर्यः। प्रकृतिः स्त्री भोग्यशक्तिप्रधानात्तस्याः

शक्तेर्वर्द्धकश्च चन्द्रमाः । अतएव चन्द्रमरीचिप्रसारात्प्रायो भोग्यौषध्यादीनि वर्द्धन्ते तानि च सूर्यमरीचिप्रतापाच्छुष्यन्ति । भोग्यं स्थूलं सूक्ष्मं चोभयरूपं भवति भोक्ताऽपि भोग्यत्वमापद्यते शरीरमन्तरेणात्मापि भोक्तुमनर्हः । शरीरं कस्यचिद्भोक्तुर्भोग्यं कस्यचित्तदेव भोक्तृ भवति । अतएव—चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः । अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ॥ इति पञ्चमाध्याये मनुः [सिद्धानुवादोऽयं नतु विधिवाक्यम् । सहस्तैरहस्ता भक्षणीया इति । अप्राप्तौ लिङादिक्रियासत्त्वे च विधिः प्रतीयते तदुभयमत्र नास्ति ] ॥

आत्मा भोक्ता प्राधान्येनामूर्त्तः सूक्ष्मो न कदाचित्स्वरूपेण स्थूलत्वमापद्यते भोग्यं प्राधान्येन मूर्त्तं स्थूलं सामान्येनोभयरूपं भवितुमर्हति । इत्थं भेदद्वयेनैव सर्वा सृष्टिर्नानारूपत्वमापद्यते । इदमेव सृष्टिकर्त्तुर्विद्याविचित्रत्वं ज्ञानिनाऽनुसन्धेयम् ॥ ५ ॥

भाषार्थः--अब कारण सहित भोक्ता और भोग्य के साधर्म्य वैधर्म्य दिखाने पूर्वक व्याख्यान का प्रारम्भ करते हैं (ह,वै) निश्चय कर प्रत्यक्ष प्रसिद्ध (आदित्यः) दिन रात्रि आदि काल के विभागसे

सब पदार्थों को नया पुराना करता हुआ सूर्य (प्राणः) प्राणों अर्थात् मनुष्यादि के जीवन का मुख्य निमित्त होने से प्राण कहाता है (रयिः)(एव) धनादि भोग्य ऐश्वर्य का मुख्य निमित्त होनेसे (चन्द्रमाः) मन को प्रसन्न करने वाले चन्द्रमा का नाम रयि है। अर्थात् भोगने वाली और भोग में आने वाली शक्तियों के मुख्य-ता से उत्तेजक और निमित्त सूर्य चन्द्रमा हैं इन दोनों के विना भोक्तृ भोग्यशक्ति नहीं ठहर सक्तीं इससे वे सूर्यचन्द्रमा ही दोनों प्राण और रयि शब्द के वाच्य हैं यह भेद दिखाया गया है। अथवा (एतत्,सर्वम्) यह सब प्रत्यक्ष दीखता (यत्) जो मूर्त्तम्) स्थूल और (अमूर्त्तम्, च) सूक्ष्म भोक्ताभोग्यरूप जगत् है वह (रयिर्वै)भोग्य ही है क्यों कि भोक्ता भी कहीं किसी का भोग्य हो जाता है (तस्मात्) इस कारण दोनों शक्ति के एक रूप होने से (रयिः) भोग्य वस्तु (मूर्त्तिरेव) स्थूल ही है अर्थात् सूक्ष्म भोग्य भी स्थूल हो जाता वा स्थूलकार्य जगत् की अपेक्षा वह सूक्ष्म कहाता और भोक्ता पुरुष की अपेक्षा स्थूल माना जाता है क्यों कि भोक्तृ शक्ति भोग्य से सदा सूक्ष्म ही रहती है इसलिये प्रजा-पति ही भोग्यभोक्ता स्थूल सूक्ष्मरूप हुआ है और विवक्षा परक भेद है यह आशय जानो।

भा०-- मनुस्मृति में लिखा है कि सूर्य से वर्षा, वर्षा से अन्न, और अन्नसे वीर्यादि होकर मनुष्यादि प्राणियों की उत्पत्ति होती है इस प्रकार परम्परा से भोक्ता प्राणियों की स्थिति में सूर्य ही मुख्य निमित्तकारण है। भोगने वाली क्रिया का बढ़ाने वाला सूर्य्य है इसी से रात्रि में भूख आदि कम लगती जाठराग्नि सूर्य्य की सहाय-ता विना मन्द रहता है। जो भोग्य वस्तुओं के अन्तर्गत है भोग्य-शक्ति को बढ़ाने वाला चन्द्रमा है इसीसे स्त्रियों का कामदेव रात्रि में चन्द्रमा के प्रकाश से बढ़ता है और चन्द्रमा की उपमा भी स्त्रियों के मुख को इसी कारण दी जाती है। भोक्ता पुरुषरूप शक्ति मुख्य

कर सूर्य में, है और चेतन प्राणियों में भोक्तृ शक्ति का बढ़ाने वाला सूर्य ही है। स्त्रीरूप भोग्य प्रकृति शक्ति चन्द्रमा में मुख्य है क्योंकि वह उस शक्ति का बढ़ाने वाला है। इसी लिये चन्द्रमा के किरण फैलने से प्रायः भोग्य ओषधि आदि पदार्थ बढ़ते हैं और वे ही ओषधि आदि सूर्य की किरणों के प्रताप से सूखते हैं। भोग्य वस्तु स्थूल सूक्ष्म दोनों रूप हैं क्योंकि भोक्ता भी भोग्य होजाता है। शरीर के विना आत्मा भी कोई भोग नहीं कर सकता। मनुष्यादि का शरीर भी किसी भोक्ता का भोग्य और किसी का भोक्ता होजाता है इसलिये मनुस्मृति में कहा है कि-चेतनका जड़ दांत वालों का विना दांत वाले हाथ वालों का विना हाथ वाले और हिंसक प्राणियों का अन्न डरपोक प्राणी हैं अर्थात् प्राणी भोक्ता और प्राणी ही उन भोक्ता सिंहादि के भोग्य हैं [यह विधि वा आज्ञा वाक्य नहीं है कि "हाथ वाले विना हाथ वालों को खाजावें" दो रीति से विधिवाक्य समझे जाते हैं। एक तो जिस काम का होना विना आज्ञा दिये प्राप्त नहीं उसके लिये विधान किया जाता है। सो हिंसक बलवान् प्राणी निर्बलों को स्वयमेव खा रहे हैं। इस लिये विधान की आवश्यकता नहीं। द्वितीय लिङादि क्रिया के होने से विधि वाक्य होते हैं सो भी यहां नहीं है] भोक्ता जीवात्मा सूक्ष्म है स्वरूप से कभी स्थूल नहीं होता। भोग्य वस्तु मुख्य स्थूल हैं और सामान्य से दोनों रूप हैं इस प्रकार दो भेद होने से ही सब सृष्टि अनेक रूप हो जाती है। परमात्मविद्या की इसी विचित्रता का अनुसन्धान ज्ञानी को करना चाहिये ॥५॥

**अथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान्**

**रश्मिषु सन्निधत्ते । यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥६॥**

अथ । आदित्यः । उदयन् । यत् । प्राचीम् । दिशम् । प्रविशति । तेन । प्राच्यान् । प्राणान् । रश्मिषु । सन्निधत्ते । यत् । दक्षिणाम् । यत् । प्रतीचीम् । यत् । उदीचीम् । यत् । अधः । यत् । ऊर्ध्वम् । यत् । अन्तराः । दिशः । यत् । सर्वम् । प्रकाशयति । तेन । सर्वान् । प्राणान् । रश्मिषु । सन्निधत्ते ॥ ६ ॥

अ०—अथ भोक्तृशक्तिं व्याचष्टे—(अथ) रात्रिविनाशे (आदित्यः)सूर्यः (उदयन्)(यत्)यस्मात् (प्राचीम्)पूर्वाम् (दिशम्) (प्रविशति) स्वतेजसा (व्याप्नोति)(तेन)कारणेन(प्राच्यान्)पूर्वदिक्स्थान् (प्राणान्) भोक्तृशक्तीः ( रश्मिषु ) स्वावभासेषु (सन्निधत्ते) संयोजयति (यत्,दक्षिणाम्) (यत्,प्रतीचीम्)(यत्, उदीचीम्)(यत्, अधः, यत्, ऊर्ध्वम्) (यत्, अन्तराः, दिशः) प्रदिशः प्रविशति (यत्) यस्माच्चान्यत्( सर्वम् ) (प्रकाशयति) तेन, सर्वान्, प्राणान् ) सर्वत्रस्थान् (रश्मिषु) ( सन्निधत्ते ) ॥

भा०—अत्र प्रसङ्गे प्राणशब्देन वायुभेदो हृदचारी न ग्राह्यः किन्तु प्रकृष्टतयानिति जीवयति

सर्वानिति जाठराग्नितेजोरूपा भोक्तृशक्तिर्विज्ञेया। सूर्यश्च सर्वतेजसवस्तूनां कारणं तदाश्रयेणैव सर्वा भोक्तृशक्तिः प्रवर्द्धते स्वस्वकर्माणि प्रवर्त्तते च। अतएव जाठराग्निरूपा भोक्तृशक्तिस्तमिस्रायां मन्दत्वमापद्यते सूर्योदयात्सजातीयतद्रश्मिसाहाय्यमुपलभ्योद्दीपिता जायते। यत्र यत्र प्रदेशे सूर्यरश्मयः प्रसरन्ति तत्र तत्रस्था भोक्तृशक्तयस्तन्मया भवन्ति। यथौषध्यादिषु प्रविष्टा रश्मयः शीघ्रपाकेनोदकापेक्षां जनयन्ति। पञ्चममन्त्रे भोग्यं भोक्तृरूपापन्नमुक्तमनेन च भोक्तृशक्तिः सर्वभोग्यरूपापन्ना प्रदर्श्यते ॥६॥

भावार्थ--अब भोक्तृशक्तिका व्याख्यान करतेहैं--(अथ) रात्रि की समाप्ति होते समय (आदित्यः) सूर्य (उदयन्) उदित होता हुआ (यत्) जिस कारण (प्राचीम्) पूर्व (दिशम्) दिशामें (प्रविशति) प्रवेश करता अर्थात् अपने तेज से व्याप्त होता है (तेन) इसीकारण (प्राच्यान्) पूर्वदिशामें स्थित (प्राणान्) भोक्तृशक्तियोंको (रश्मिषु) अपने प्रकाशमय किरणों में (सन्निधत्ते) संयुक्त करता (यत्, दक्षिणाम्) जिससे दक्षिण दिशा (यत्, प्रतीचीम्) जिससे पश्चिम (यत्, उदीचीम्) जिससे उत्तर (यत्, अधः) जिस से नीचे (यत्, ऊर्ध्वम्) जिस से ऊपर और (यत्, अन्तराः, दिशाः) बीचकी कोण दिशा ईशान आदिमें प्रवेश करता अर्थात् अपने किरणरूप प्रकाश को फैलाता है (यत्) और जिस कारण अन्य (सर्वम्) सब वस्तुमात्रको (प्रकाशयति) प्रकाशित करताहै (तेन)

तिस से ( सर्वान् ) सब (प्राणान्) भोक्तृशक्तियों को ( रश्मिषु) अपने किरणों में ( सन्निधत्ते ) संयुक्त करता है ॥

भा०—इस प्रकरणमें प्राण शब्द करके हृदयमें ठहरने वाला वायुका भेद न लेना चाहिये। किन्तु अच्छे प्रकार सब जन्तुओं के जीवनका हेतु जाठराग्नि आदि तेजोमय (जिससे भूंख लगती वा पदार्थोंके सूखने से जल की अपेक्षा होती ऐसी ) भोग करने कराने वाली शक्ति प्राणशब्द से लेनी चाहिये और सब तैजस वस्तुओंका कारण सूर्य है उसीके आश्रयसे सब भोग करने वाली शक्ति बढ़ती और अपने २ काममें प्रवृत्त होती है। इसी कारण सूर्यकी सहायता न मिलने से जाठराग्निरूप भोक्तृशक्ति रात्रिमें मन्द रहती है और सूर्योदय होने से अपने जातीय सूर्यकी किरणों की सहायता को प्राप्त होके उत्तेजित होजाती है। जिधर प्रदेश में सूर्य की किरणें पसरती जाती हैं वहां २ की भोक्तृशक्तियां सूर्य की किरणरूप होती जाती हैं। जैसे ओषधि वृक्ष वनस्पति आदिमें प्रविष्ट हुई सूर्यकी किरणें सुखाना गुण प्रकट करके जलकी अपेक्षा उत्पन्न करती हैं। पूर्व मन्त्र में भोग्यवस्तु को भोक्तृरूप कहा और इस मन्त्र से भोक्तृशक्ति सर्वभोग्यरूप दिखायी है ॥ ६ ॥

**स एष वैश्वानरो विश्वरूपः प्राणो-ऽग्निरुदयते । तदेतदृचाऽभ्युक्तम् ॥७॥**

सः । एषः । वैश्वानरः । विश्वरूपः । प्राणः । अग्निः । उदयते । तत् । एतत् । ऋचा । अभ्युक्तम् ॥ ७ ॥

अ०—पुनस्तदेवाह—(सः)पूर्वोक्त आदित्यः(एषः) प्रत्यक्षः(वैश्वानरः) विश्वेषां सर्वेषां प्राणिनां नरो

नायकः सर्वात्मा स्वस्वकर्माणि स्वस्योदयेन प्रकाशदानेन च प्रेरको विश्वानरो विश्वानर एव वैश्वानर इति स्वार्थेऽण् (विश्वरूपः) स्वतेजसा सर्वभोग्यभोक्तृशक्तिस्वरूपः (प्राणः) अन्नाद्युत्पादनेन सर्वजन्तूनां जीवनस्य हेतुः (अग्निः) ज्योतिः सूर्यः (उदयते) उदितो भवति (तत्, एतत्) तत्पूर्वोक्तमेतन्मन्त्रोक्तं च व्याख्यानम् (ऋचा) जगत्या श्रुत्या मन्त्रेण (अभ्युक्तम्) प्रतिपादितम् ॥

भा०—सूर्योदयादेव सर्वे स्वस्वकर्मणि प्रवर्त्तन्ते सूर्यो ज्योतीरूपेणाधिदेवपक्षेऽवस्थितोऽध्यात्मपक्षे च प्राणरूपेण सर्वं चालयति। स एव सर्वान् बुभुक्षितान् क्रत्वान्नाद्यमुत्पाद्य जीवयति तस्य सवितुर्व्याख्यानं वक्ष्यमाणेन मूलवेदमन्त्रेण दर्शयति। ब्राह्मणोपनिषदामृक्त्वाभावेऽपि यजुष्ट्वादिवद्वेदत्वमस्ति स्वतुल्यस्य स्वतोऽवकृष्टस्याप्यनुमतिः शिष्टैः स्वाभिमतपोषणार्थमादीयते यथा व्यासेन ब्रह्मसूत्रादिषु स्वशिष्यशिष्यस्य जैमिनेर्मतमुक्तम् ॥ ७ ॥

भावार्थः—फिर उसी भोक्तृशक्ति की व्याख्या करते हैं— (सः) वह पूर्वोक्त (एषः) प्रत्यक्ष सूर्य (वैश्वानरः) अपने उदय होने और प्रकाश दे करके सब प्राणियों को अपने २ कर्म में प्रेरणा देने वाला सब जीवात्मस्वरूप (विश्वरूपः) अपने तेज करके सब भोग्य भोक्तृशक्तिरूप बना (प्राणः)

अन्नादि पदार्थ उत्पन्न करके जीवन का हेतु (अग्निः) सूर्य ज्योतिः (उदयते) उदित होता है (तत्, एतत्) वह पूर्वोक्त और इस मन्त्र में कहा तात्पर्य (ऋचा) ऋग्वेदस्य वक्ष्यमाण अगली मन्त्र से (अभ्युक्तम्) कहा है अर्थात् इस विषय में ऋग्वेद के अगले मन्त्र का प्रमाण है ॥

भा०—सूर्य का उदय होने से ही सब प्राणी अपने २ काम में लगते हैं सूर्यनारायण ज्योतिःस्वरूप से अधिदेव पक्ष में विद्यमान होते हुए प्रेरक हैं और प्राणरूप से अध्यात्म पक्ष में सब को चलाते हैं। वही सूर्य सब को भूंख की इच्छा और खाने योग्य अन्नादि उत्पन्न करके जिमाते हैं। उन सूर्य का व्याख्यान आगे कहे वेद मन्त्र से दिखाते हैं। ब्राह्मण और उपनिषदों के ऋचा न होने पर भी जैसे यजुः वेद कहाता वैसे ये उपनिषद् भी वेद हैं। शिष्ट लोग अपने बराबर वाले की और अपने से छोटे की भी अनुमति अपने अभीष्ट के पोषणार्थ लेते हैं। जैसे व्यास जी ने वेदान्त सूत्रादि में अपने शिष्य (वैशम्पायन) के शिष्य जैमिनि का विचार लिखा है ॥७॥

**विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्। सहस्ररश्मिः शतधा वर्त्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥**

विश्वरूपम्। हरिणम्। जातवेदसम्। परायणम्। ज्योतिः। एकम्। तपन्तम्। सहस्ररश्मिः। शतधा। वर्त्तमानः। प्राणः। प्रजानाम्। उदयति। एषः। सूर्यः ॥ ८ ॥

अ०—यः (सहस्ररश्मिः) सहस्रमसंख्याता रश्मयो यस्य (शतधा) असंख्यप्रकारैर्भोक्तृशक्तिषु स्वतेजसा (वर्त्तमानः) (प्रजानाम्) प्रजातानां प्राणिनां देहेषु (प्राणः) प्राणरूपेण

जीवनहेतुः ( एषः ) प्रत्यक्षः ( सूर्यः ) (उदयति) तम् ( विश्वरूपम् ) सर्वभोक्तृशक्तिमयम् (हरिणम् ) किरणवन्तम् ( जातवेदसम् ) जातं वेदो विज्ञानं शोभा वा यस्मात्तम् ( परायणम् ) परं च तदयनं पुण्यात्मप्राणिनां महदाश्रयम् (तपन्तम् ) तापयन्तम् ( एकम् ) ( ज्योतिः ) ज्योतिःस्वरूपम् । एवम्भूतं सूर्यं विद्वांसस्तत्त्वतो जानन्ति ॥

भा०–नेयमृक् चतसृषु शाकलादिवेदशाखास्वस्ति तस्मादन्यशाखानामृक्त्वमतः प्रमाणादपि सिद्धम् । आदित्यान्तर्गतसूर्यनामरूपकस्य परमात्मनएवेदं माहात्म्यं बोध्यं तदेवाग्निस्तदादित्यइत्यादि श्रुतेः ॥८॥

भावार्थः–जो ( सहस्ररश्मिः ) असंख्य किरणों वाले ( शतधा ) असंख्य प्रकारों से भोक्तृशक्तियों में अपने तेज करके ( वर्त्तमानः ) व्याप्त ( प्रजानाम् ) उत्पन्न हुए प्राणियों के शरीर में प्राणरूप से जीवन के हेतु ( एषः ) यह प्रत्यक्ष (सूर्यः) सूर्यनारायण ( उदयति ) उदय को प्राप्त होते हैं उस ( विश्वरूपम् ) सब भोगने वाली शक्तिस्वरूप ( हरिणम् ) किरण वाले ( जातवेदसम् ) विज्ञान वा शोभा जिन से उत्पन्न हुए ऐसे प्राणियों की स्थिति में सर्वोत्तम आश्रय ( तपन्तम् ) दाह गुणयुक्त ( एकम् ) एक ( ज्योतिः ) ज्योतिः प्रकाशस्वरूप सूर्य को विद्वान् लोग ठीक २ जानते हैं ॥

भा०–( विश्वरूपम्० ) यह ऋचा वेद की शाकलादि चार शाखाओं में नहीं है और इस को यहां ऋचा कहा है इस से

अन्य शाखाओं का वेद होना इस प्रमाण से भी सिद्ध है। आदित्य के अन्तर्गत सूर्य नाम रूप वाले परमात्मा का ही इस मन्त्र में भी माहात्म्य कहा है। "वही अग्नि और वही सूर्य है" इत्यादि श्रुति परमेश्वर को आदित्य रूप कहती है ॥८॥

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च। तद्ये ह वै तदिष्टापूर्त्ते कृतमित्युपासते। ते चान्द्रमसमेव लोकमभिजयन्ते। त एव पुनरावर्त्तन्ते तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते। एष ह वै रयिर्यः पितृयाणः॥९॥

संवत्सरः। वै। प्रजापतिः। तस्य। अयने। दक्षिणम्। च। उत्तरम्। च। तत्। ये। ह। वै। तत्। इष्टापूर्त्ते। कृतम्। इति। उपासते। ते। चान्द्रमसम्। एव। लोकम्। अभिजयन्ते। ते। एव। पुनःऽआवर्त्तन्ते। तस्मात्। एते। ऋषयः। प्रजाकामाः। दक्षिणम्। प्रतिपद्यन्ते। एषः। ह। वै। रयिः। पितृयाणः॥९॥

अ०—(संवत्सरः) कालविभागात्मकः (वै) (प्रजापतिः) प्रजातायाः सृष्टेः पालकः संवत्सरात्मकः प्रजापतिरीश्वरः (तस्य) वर्षमितकालस्य (दक्षिणम्, च) (उत्तरम्, च) द्वे (अयने) भवतः (तत्) तयोर्मध्ये (ये, ह, वै) (तत्) ते (इष्टापूर्त्ते) वैदिकं श्रौतयज्ञादिकर्मेष्टं वापीकूपनिपाततडागदेवतायतनानाथालयादिनिर्माणं पूर्त्तं स्मार्त्तं कर्म ते द्वे अपि श्रौतस्मार्त्ते कर्मणी (कृतम्) अस्य सर्वस्यानुष्ठितस्य सिद्धं फलमस्माकं प्राप्नुयादिति बुद्ध्या (उपासते) सेव-

न्ते ( ते ) ( चान्द्रमसमेव प्रजापतेर्मिथुनात्मकस्यांशं भोग्यप्रधानं स्वर्गम् ( लोकम् ) रयिमन्नभूतम् ( अभिजयन्ते ) प्राप्नुवन्ति ( त एव ) भोग्यासक्तमनस एव ( पुनरावर्तन्ते ) कृतक्षयात्पुनरावृत्ता इमं हीनतरं वा लोकं विशन्ति (तस्मात् ) ( एते ) ( ऋषयः ) उक्तप्रकारेण श्रौतस्मार्त्तकर्मानुष्ठातारः ( प्रजाकामाः ) प्रजाः पुत्राद्योऽस्माकं स्युरिति कामयमानाः ( दक्षिणम् ) परमार्थापेक्षया निकृष्टं मार्गम् ( प्रतिपद्यन्ते ( यः ) ( पितृयाणः ) पितृमार्गः सः, दक्षिणाप्रवणोवैपितृलोकइतिश्रुतेः । ( एषः, ह, वै, रयिः ) भोग्यम् ॥

भा०—सर्वविषयेषूत्तमनिकृष्टौ द्वौ भेदौ प्रधानौ स्तस्तयोरुत्तमशब्दवाच्य उत्तरशब्दो निकृष्टपर्यायश्च दक्षिणशब्दः । अतएव संवत्सरात्मकप्रजापतेर्द्वौ भेदौ दक्षिणायनमुत्तरायणं च षट्षण्मासपरिमिते । प्रवृत्तिपरं भोग्यप्रधानं दक्षिणायनं निवृत्तिमार्गपरं भोक्तृशक्तितेजस्प्रधानमुत्तरायणम् । उत्तरायणापेक्षया भोग्यानां स्थूलवस्तूनां प्राण्यप्राणिनामुत्पत्तिविनाशावधिकतरं दक्षिणायने भवतः । अतएव भोग्यप्रधानं मेघादिजन्यतमःपरं, भोक्तृप्रधानं सूर्यादिप्रकाशपरमुत्तरायणम् । एवं भोक्तृभोग्यशक्त्योः

प्राधान्याप्राधान्याभ्यां संवत्सरः प्रजानां रक्षकः प्रजापतिः । ये श्रौतस्मार्त्तं कर्मणो ऽपि फलाकाङ्क्षयानुतिष्ठन्ति ते जन्ममरणचक्र एव भ्रमन्ति तेषां दक्षिणः पितृयाणसञ्ज्ञःस्वर्गमार्गः परमपदप्राप्त्यपेक्षया निकृष्टस्तमेव प्राप्नुवन्ति।९॥

भावार्थः ( संवत्सरः ) काल का विभागरूप ( वै ) निश्चय कर ( प्रजापतिः ) उत्पन्न हुई सृष्टि का रक्षक संवत्सरस्वरूप प्रजापति ईश्वर [काल से भी सृष्टि की रक्षा होती है] (तस्य) उस एक वर्ष काल के ( दक्षिणम् ) दक्षिणायन ( च ) और ( उत्तरम्, च ) उत्तरायण भी दो ( अयने ) भाग वा पक्ष होते हैं उन में से ( ये, ह, वै ) जो प्रसिद्ध लौकिक धर्मात्मा लोग ( तत् ) उन ( इष्टापूर्त्ते ) श्रौत यज्ञादि वैदिक कर्म इष्ट और बावली, कुआ, प्याऊ, तालाव, देवालय, वाग, वगीचा और अनाथालयादि का बनाना धर्मशास्त्रसम्बन्धी पूर्त्त कर्म का कि ( कृतम् ) इस कर्म का सिद्ध उत्तम सुख भोगरूप फल हम को मिले ( इति ) ऐसी बुद्धि से ( उपासते ) सेवन करते हैं वे ( चान्द्रमसम् एव, ) मिथुनात्मक प्रजापति के अंश भोग्यप्रधान स्वर्ग ( लोकम् ) अच्छे दर्शनीय रूप सहित स्थान को वा शरीरादि भोगाधिष्ठान को ( अभिजयन्ते ) जीत लेते हैं अर्थात् बहुत से उत्तम २ सुख भोग उन के अधिकार में हो जाते हैं ( तएव ) वे ही भोग्य वस्तुओं में आसक्त चित्तवाले पुरुष ( पुनरावर्त्तन्ते ) पुण्य के क्षीण होने से स्वर्ग से लौटे हुए इस मृत्युलोक को वा इन से भी निकृष्ट भोगवाले लोक को प्राप्त होते हैं ( तस्मात् ) तिस से ( एते ) ये ( ऋषयः ) उक्त प्रकार से श्रौतस्मार्त्त कर्मों का सेवन करने वाले वेदवेत्ता ऋषिजन ( प्रजाकामाः ) पुत्र पौत्रादि सन्तान हमारे हों ऐसी

कामना रखते हुए ( दक्षिणम् ) मुक्ति की अपेक्षा निकृष्ट दक्षिण स्वर्ग मार्ग को ( प्रतिपद्यन्ते ) प्राप्त होते हैं ( यः ) जो ( पितृयाणः ) संसारचक्र में घूमना पितृलोक का मार्ग है श्रुति में कहा है कि दक्षिण दिशा की ओर झुका हुआ पितरों का लोक है। ( एषः, ह, वै, रयिः ) यही भोग्यशक्ति प्रधान है॥

भा०—सब विषयों में उत्तम निकृष्ट दो भेद मुख्य हैं उन में उत्तम शब्द वाच्य उत्तर और निकृष्ट का पर्यायवाची दक्षिण शब्द है। इसीलिये संवत्सरात्मक प्रजापति के छः २ मास के दो भेद उत्तरायण और दक्षिणायन किये गये। प्रवृत्ति बढ़ाने वाला भोग्य जिस में अधिक होता ऐसा दक्षिणायन और निवृत्तिमार्गप्रधान भोक्तृशक्ति तेज का बढ़ाने वाला उत्तरायण है। उत्तरायण की अपेक्षा से प्राणी वा अप्राणीरूप स्थूल भोग्य वस्तुओं के उत्पत्ति और नाश अधिकतर दक्षिणायन में होते हैं, इसी कारण भोग्यप्रधान मेघादि से हुए अन्धकार परक दक्षिणायन और भोक्तृशक्तिप्रधान सूर्यादि प्रकाशपरक उत्तरायण होता है। इस प्रकार भोक्तृ और भोग्यशक्तियों के प्रधान और अप्रधान होने से संवत्सरात्मक प्रजापति प्रजा का रक्षक है, इसलिये जो लोग श्रौतस्मार्त्त कर्मों को फल प्राप्ति की अभिलाषा से सेवन करते हैं वे संसार में जन्ममरणरूप चक्र पर चढ़े हुए घूमते हैं, उनका पितृयाणसंज्ञक दक्षिण स्वर्गमार्ग है। वह परमपद प्राप्ति की अपेक्षा निकृष्ट है उसी मार्ग को वे प्राप्त होते हैं॥ ९॥

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते। एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्तइत्येष निरोधस्तदेष श्लोकः॥१०॥

अथ। उत्तरेण। तपसा। ब्रह्मचर्येण। श्रद्धया। विद्यया। आत्मानम्। अन्विष्य। आदित्यम्। अभिजयन्ते। एतत्। वै।

प्राणानाम् । आयतनम् । एतत् । अमृतम् । अभयम् । एतत् । परायणम् । एतस्मात् । न । पुनः ऽआवर्त्तन्ते । इति । एषः । निरोधः । तत् । एषः । श्लोकः ॥ १० ॥

अ०—( अथ ) उक्तानन्तरं भोक्तृप्राधान्यमोच्यते—( उत्तरेण ) उत्तमेनोत्कृष्टेनोत्तरायणेन सह ( तपसा ) द्वन्द्वसहनचान्द्रायणादिव्रतनियमानुष्ठानेन (ब्रह्मचर्येण) उपस्थेन्द्रियनिग्रहेण ( श्रद्धया ) ( विद्यया ) वेदतत्त्वज्ञानेन च ( आत्मानम् ) परमात्मानम् ( अन्विष्य ) इन्द्रियमनोदेहेभ्यःपृथक्त्वेन विविच्य ( आदित्यम् ) प्रकाशमयं भोक्तृस्वरूपमादित्यलोकम् (अभिजयन्ते) आदित्यलोकस्याधिष्ठातारो भवन्ति ( एतद्वै ) भोक्तृस्वरूपमात्मतत्त्वमेव ( प्राणानाम् ) ( आयतनम् ) अधिष्ठानम् । अस्यैवाश्रयेण प्राणाः प्रतिष्ठन्ते ( एतत् ) आदित्यलोकाधिष्ठातृत्वम् ( अमृतम् ) अविनश्वरम् ( अभयम् ) नास्ति भयमस्मिन्नस्माद्वा ( एतत् ) (परायणम् ) परं च तदयनं ज्ञानिनां पराकाष्ठा ( एतस्मात् ) सतआत्मज्ञानात् ( न, पुनः, आवर्त्तन्ते ) मृत्युलोकं न प्राप्नुवन्ति (इति, एषः) प्रकाशमयः स्वात्मा ( निरोधः ) पुनरावृत्तेर्निरोधहेतुः । ( तत् ) तस्य कालात्मकेशस्य भोक्तृशक्तेरेव प्रतिपादकः ( एषः ) वक्ष्यमाणः ( श्लोकः ) अस्ति ॥

भा०—उत्तरायणे भोक्तुरात्मनो ज्ञानादिशक्तिर्वर्द्धते तदानीं ये ज्ञानोत्सुका भोग्यान्निवृत्तचित्ता योगिनस्तपोब्रह्मचर्यश्रद्धाविद्याद्युपायैरात्मज्ञानाय प्रयतन्ते ते निर्भयं निर्मलं निर्विकारं नित्यं शुद्धं सनातनं सर्वस्य जीवनहेतुं ज्ञानावध्यात्मतत्त्वं विज्ञाय मुक्ता भवन्ति किन्तु प्राकृतवत्संसारचक्रे न भ्रमन्ति ॥

यावदविद्योपाधिश्च न नश्यति तावदमृतत्वाभयत्वपरायणत्वाभावात्पुनरावृत्तिरपि जायते । उपाधिद्वयाभावे तु न पुनरावृत्तिः । अतोऽमृतत्वादिकमेव पुनरावृत्तेर्निरोधकं यथा सत्यां पुनरावृत्तावमृतत्वादिकं न सम्भवति तथा सत्यमृतत्वे पुनरावृत्तेरसम्भवः । अस्या भोक्तृशक्तेरेव प्रतिपादको वक्ष्यमाणः श्लोकः ॥ १० ॥

भाषार्थः—( अथ ) अब भोग्य की व्याख्या के पश्चात् भोक्ता की प्रधानता कहते हैं—( उत्तरेण ) उत्तरायण नामक उत्तम समय के साथ ( तपसा ) मान अपमान आदि द्वन्द्व के सहन तथा चान्द्रायणादि व्रतरूप तप से ( ब्रह्मचर्येण ) अष्टविध मैथुन के त्याग से और ( श्रद्धया ) श्रद्धापूर्वक ( विद्यया ) वेदविद्या के तत्त्वज्ञान से ( आत्मानम् ) आत्मा को ( अन्विष्य ) इन्द्रियां, मन, और शरीर से पृथक् खोजने पूर्वक जानके ( आदित्यम् ) भोक्तारूप प्रकाशमय सूर्य आत्मा को ( अभिजयन्ते ) वश में करते अर्थात् सूर्यलोक के अधिष्ठाता भगवत्स्वरूप हो जाते हैं ( एतत्, वै ) यही भोक्ता स्वरूप आदित्याभिमानी देव ( प्राणानाम् ) प्राणों का ( आयतनम् )

आधार है इसी के आश्रय से शरीर के बीच प्राणों की स्थिति रहती है ( एतत् ) यह ( अमृतम् ) अपने वास्तविक रूप से अविनाशी ( अभयम् ) जिस से वा जिस में कदापि भय नहीं अर्थात् उस के स्वरूप से किसी प्रकार का दुःख किसी को नहीं होता, दुःख के हेतु का ही नाम भय है ( एतत् ) यह आत्मा (परायणम्) ज्ञान की अवधि है, इस का ज्ञान होना ही परमात्मज्ञान कहाता है, आगे जानना कुछ शेष नहीं रह जाता ( एतस्मात् ) इस आत्मज्ञान के होने से ( न, पुनः,-आवर्त्तन्ते ) ज्ञानी लोग बार २ जन्म मरण के प्रवाह को नहीं प्राप्त होते ( इति, एषः ) इस उक्त प्रकार का भोक्ता प्रकाश स्वरूप आत्मा ( निरोधः ) पुनरावृत्ति से रोकने का हेतु है (तत्) उस कालात्मक भोक्तृशक्तिरूप ईश्वर का प्रतिपादन करने वाला ( एषः ) यह आगे कहा ग्यारहवां ( श्लोकः ) श्लोक वा मन्त्र है अर्थात् अगला श्लोक अन्य ग्रन्थ का है सो प्रमाणार्थ रक्खा गया है ॥

भा०—उत्तरायण में भोक्ता आत्मा की ज्ञानादि शक्ति बढ़ती है। तब जो ज्ञान चाहने वाले हैं, भोग से जिन का चित्त हट गया ऐसे योगी लोग तप ब्रह्मचर्य और श्रद्धापूर्वक वेदविद्याभ्यासादि से आत्मज्ञान होने का प्रयत्न करते हैं। वे निर्भय, निर्मल, निर्विकार, नित्य, शुद्ध, सनातन, सब के जीवनहेतु और ज्ञान की अवधिरूप आत्मा को जानके मुक्त होते हैं। किन्तु साधारण मनुष्य के तुल्य संसाररूप चाक पर नहीं भ्रमते हैं। जबतक अविद्या और माया की उपाधि नष्ट नहीं होती तबतक अमर अभय और एक रस न होने से पुनरावृत्ति भी होती है। परन्तु दोनों उपाधियों के न रहने पर पुनरावृत्ति नहीं होती, इस से अमर होना आदि ही पुनरावृत्ति का रोकने वाला है। जैसे पुनरावृत्ति होने पर अमर होना आदि सम्भव नहीं तैसे ही अमर होने पर पुनरा-

वृष्टि असम्भव है । इस सौरशक्ति का ही प्रतिपादक अगला श्लोक भी है ॥ १० ॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥

पञ्चपादम् । पितरम् । द्वादशाकृतिम् । दिवः । आहुः । परे । अर्द्धे । पुरीषिणम् । अथ । इमे । अन्ये । उ । परे । विचक्षणम् । सप्तचक्रे । षडरे । आहुः । अर्पितम् । इति ॥ ११ ॥

अ०—संवत्सरो वै प्रजापतिरित्यतः कालात्मकस्य प्रजापतेर्व्याख्यानं प्रकृतम् । तदिदानीं संवत्सरादिकालविभागहेतुत्वाद्वृष्टिशक्तिप्रधानस्य सूर्यस्य संवत्सररूपेण व्याख्यानं क्रियते ( पञ्चपादम् ) पञ्चर्त्तवः पादा अस्य तम् । हेमन्तेऽत्र शिशिरस्यान्तर्भावं मत्वा पञ्चत्वमुच्यते (द्वादशाकृतिम्) द्वादश मासा आकृतयोऽवयवा अङ्गानीव यस्य ( पुरीषिणम् ) पुरीषमुदकं सम्बद्धमस्मिन् । जन्यजनकभावेन जलसूर्ययोः सम्बन्धः । आदित्याज्जायते वृष्टिरिति सूर्यादेवोदकमुत्पद्यते सुवर्णकुण्डलादिवद्द्वयोस्तादात्म्यम् ( दिवः ) अन्तरिक्षलोकादुपरि द्युलोकस्य ( परे ) परस्मिन् ( अर्द्धे ) अर्द्धभागे वर्त्तमानं सूर्यात्मकं संवत्सरम् ( पितरम् ) जनकमिवोत्पादकं पालकं च ऋषयः ( आहुः ) क-

थयन्ति ( अथ,उ ) ( इमे, अन्ये ) विद्वांसः ( षडरे ) षड्ऋतुरूपा अरा अस्मिन् ( सप्तचक्रे ) भूराद्रिसप्तव्याहृतिवाच्या एव चक्राणीव भ्रमणशीला यस्य तस्मिन् ( परे ) उत्तमे संवत्सर कालात्मकरथे ( विचक्षणम् ) चक्षुष उपोदानत्वाद् विशेषेण चक्षयति दर्शयति सर्वं रूपमिति विचक्षणः सूर्यस्तम् (अर्पितम्) प्रतिष्ठितम् ( आहुः) कथयन्ति । इति शब्दः श्लोकस्य ग्रन्थान्तरस्थत्वसूचनार्थः ॥

भा०—यमन्तरा यस्य स्वरूपं नोपलभ्यते तस्य तद्वात्मकत्वं लोकवच्छास्त्रेऽपि व्याम्रियते सूर्यमन्तरा च संवत्सरादिकालविभागस्य सत्त्वं नास्ति कारणमेव कार्यात्मना विपरिणमते पटे सूत्रमिव, तस्मात् संवत्सरस्वरूपः सूर्य एव। भोक्तृशक्तिमयस्य तेजोरूपस्य कालविभागनिमित्तत्वात्संवत्सरादेरपि भोक्तृशक्तिप्रधानत्वमर्थात् सिद्धम् । स्त्रीपुरुषभोग्यभोक्तृरूपदक्षिणायनोत्तरायणयोर्मिथुन्येन सम्मिलितादेकीभूतात्संवत्सरात्मकसूर्यात्प्रत्यहं विविधं जगदुत्पद्यते । रथरथिकल्पनायां संवत्सरकालात्मक सूर्यमण्डलाधिष्ठानरूपो रथस्तदधिष्ठातृदेवश्च स्वामी रथी द्वयोश्च तादात्म्यभावादधिष्ठातुरपि पञ्चपादत्वादिकं नानुचितं तस्य पितृत्वं चोचित-

तस्मैव इत्थं मे बहुधाः प्रजाः करिष्यत इत्या-
शयः सम्पन्नः ॥११॥

भावार्थः—( संवत्सरो वै० ) इस नवमें मन्त्र से काला-त्मक प्रजापति के व्याख्यान का प्रकरण चला आता है, सो अब संवत्सरादिकाल विभाग का हेतु होने से भोक्तृशक्ति रूप सूर्य का संवत्सर रूप से व्याख्यान करते हैं ( पञ्चपादम् ) पांच ऋतु जिस के पग हैं [ शिशिर ऋतु को हेमन्त के अन्तर्गत मान लेने से पांचऋतु कहे गये अन्यथा छः हैं। शिशिर में शीत विशेष रहने से हेमन्त में गिन लिया गया अर्थात् शिशिर ऋतु का पृथक् मानना प्रधान वा सर्वसम्मत नहीं है] (द्वादशाकृतिम्) बारह महीने जिसके हाथ पांव आदि अङ्गों के तुल्य हैं अर्थात १२ महीने मिलकर ही संवत्सर बनता है (पुरीषिणम्, पुरीषनाम जल जिसके सम्बन्धमें रहता है[सूर्यसे जलकी उत्पत्ति होती है इस लिये सूर्य और जलका जन्यजनकभाव सम्बन्ध है। मनुस्मृति में लिखा है कि सूर्यसे ही जलकी वर्षा होती है सुवर्ण का कुण्डल भी सुवर्णरूप होने के तुल्य सूर्य और जल भी तादात्म्य संबन्ध से एक ही हैं] ( दिवः ) अन्तरिक्षलोकसे ऊपर द्यु लोक के ( परे ) परले ( अर्द्धे ) अर्द्धभाग में वर्त्तमान सूर्यरूप संवत्सर को ( पितरम् ) पिता के तुल्य उत्पत्ति और रक्षा करने वाला [ जैसे पिता से वीर्य आकर गर्भ होता वैसे सूर्य से वीर्यरूप जल वर्षकर पृथिवीरूप स्त्री में अन्न ओषधि आदि उत्पन्न होते और उस के तेज से बढ़ते पकते हैं ] वि-द्वान् ऋषि लोग ( आहुः ) कहते हैं ( अथ, उ ) अब और ( इमे अन्ये ) ये अन्य विद्वान् लोग ( षडरे ) छः ऋतुरूप जिस में आरा लगे ( सप्तचक्रे) सात भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम्, ये व्याहृति नामक लोक ही जिस में पहियों के तुल्य भ्रमने वाले हैं उस ( परे ) उत्तम संवत्सर कालरूप रथ पर ( विचक्षणम् ) चक्षुका उपादान कारण होने से विशेष कर

सब के रूप को दिखाने वाले सूर्य को ( अर्पितम् ) प्रतिष्ठित वा स्थापित है ( आहुः ) कहते हैं ( इति ) यह विषय इस श्लोक में कहा गया है ॥

भा०—जिस के बिना जिस का स्वरूप कुछ नहीं प्राप्त होता उस को उसी के रूप से जैसे लोक में कहते हैं, वैसे शास्त्र में भी वर्णन करते हैं। सो सूर्य के बिना संवत्सरादि कालविभाग कोई वस्तु नहीं ठहरता कारण ही कार्य नामरूप से परिणत होता है जैसे वस्त्र भी सूतरूप ही है। इस से संवत्सर स्वरूप सूर्य ही माने गये हैं। भोक्तृशक्तिमय तेजःस्वरूप सूर्य कालविभाग के मुख्य कारण हैं, इस से संवत्सर आदि कालका भी भोक्तृशक्तिप्रधान होना स्वयमेव सिद्ध हो गया। जैसे भोग्य भोक्तारूप स्त्री पुरुष के संयोग से सन्तान उत्पन्न होते हैं वैसे भोग्य भोक्तारूप उत्तरायण दक्षिणायन एकरूप मिले संवत्सर नामक सूर्य से प्रतिदिन अनेक प्रकार का जगत उत्पन्न होता है। रथ और रथ के स्वामी की कल्पना दिखाने में काल संवत्सर रूप सूर्य षडङ्ग अधिष्ठान रूप रथ है, और उस का अधिष्ठातृ देव भी सूर्य पदवाच्य ही स्वामी है। दोनों के एक रूप होने से अधिष्ठाता को पञ्चपादादि कहना अनुचित नहीं है और सब का आदि कारण होने से अधिष्ठाता को पिता कहना सो अत्यन्त उचित है। इस प्रकार ( ते ब-हुधा० ) ये भोग्य भोक्ता दोनों मेरी इच्छानुसार बहुत प्रकार की प्रजा रचेंगे यह आशय सिद्ध होगया ॥ ११ ॥

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥**

मासः । वै । प्रजापतिः । तस्य । कृष्णपक्षः । एव । रयिः । शुक्लः । प्राणः । तस्मात् । एते । ऋषयः । शुक्ले । इष्टिम् । कुर्वन्ति । इतरे । इतरस्मिन् ॥१२॥

अ०—अवयवेषु समुदायस्य समाप्तिं द्वाभ्यां दर्शयति—( वै ) ( मासः ) ( प्रजापतिः ) उक्त प्रकारेण सूर्यात्मना जगतः स्थितिहेतुः ( तस्य ) मासस्य ( कृष्णपक्षः,एव ) ( रयिः ) निर्बलो भोग्यशक्तिप्रधानस्तमोमयः ( शुक्लः ) शुक्लपक्षः ( प्राणः ) सबलो भोक्तृशक्तिप्रधानः प्रकाशमयो जीवनहेतुः ( तस्मात् ) भोक्तृ पुरुषशक्तिवृद्धिकारणात् ( एते ) ( ऋषयः ) वेदानामध्येतारो वेत्तारश्च ( शुक्ले ) ( इष्टिम् ) दर्शपौर्णमासादिनामिकामिष्टिम् ( कुर्वन्ति )( इतरे ) अनृषयो वेदाध्ययनज्ञानविरहाः ( इतरस्मिन् ) कृष्णपक्षे यजन्तीति ॥

भावार्थः—द्वादशमाससमुदायस्यैव संवत्सरत्वम् । अवयवशक्त्यैव समुदायः शक्तिमानिति न्यायान्मासात्मकोऽपि सूर्यः प्रजास्थितिहेतुः । यथाऽन्धैर्जनैः सूर्यादिप्रकाशे सत्यप्यन्धकार एव ज्ञायते तथैव शुक्लपक्षोऽन्तःकरणस्थज्ञानशक्तेरुत्तेजकोऽपि अज्ञानां ज्ञानाभावात्कृष्ण एव । एवं ज्ञानिनां कृष्णेऽपि ज्ञानाश्रयाच्छुक्लत्वमिति सामान्यो व्याप्तिपक्षः । अमावास्यातऊर्ध्वं शुक्लः पौर्णमास्यनन्तरः कृष्णश्च पक्षइति विशेषः । अमावास्याप्रतिपदोः सन्धिकाले दर्शयागकालस्तत्रान्तवर्त्तित्वेन शुक्लस्य प्रा-

धान्यम् । पौर्णमासीप्रतिपदोश्च सन्धौ पौर्णमासेष्टिः क्रियते तत्राप्यादित्वेन शुक्लस्य प्राधान्यम् । ऋषयोऽन्यथयश्च प्रकृत्यैव शुक्ले कृष्णे चेष्टिं कुर्वन्ति प्रकृतिरेव नियोजिकाऽस्ति ॥११॥

भाषार्थः—अवयवों में समुदायकी समाप्ति होती है यह बात अब दो मन्त्रों से दिखाते हैं—( मासः, वै ) महीना भी ( प्रजापतिः ) उक्त प्रकार सूर्य रूप से जगत् की स्थिति वा उत्पत्ति का कारण है (तस्य) उस महीने का (कृष्णपक्षः, एव) कृष्णपक्ष ही ( रयिः ) अन्धकार रूप निर्बल भोग्यशक्ति का बढ़ाने वाला है ( शुक्लः ) और शुक्लपक्ष ( प्राणः ) बलवान् जीवन का हेतु प्रकाश स्वरूप भोक्तृशक्ति का बढ़ाने वाला है (तस्मात् ) इस भोक्ता पुरुष की शक्ति की वृद्धि होने से (एते) ये (ऋषयः) वेदों के पढ़ने जानने वाले ऋषिलोग (शुक्ले) शुक्ल पक्ष में (इष्टिम् ) दर्शपौर्णमासादि इष्टियों का वा अन्य यज्ञादि सत्कर्म का अनुष्ठान ( कुर्वन्ति ) करते हैं ( इतरे ) और इन ऋषियों से भिन्न वेद के पढ़ने जानने से रहित लोग ( इतरस्मिन् ) कृष्णपक्ष में यज्ञ करते हैं ॥

भा०—बारह महीनों का समुदाय ही संवत्सरहै अवयवों के सामर्थ्य से समुदाय सामर्थ्यवान् होता है इस न्याय से मास रूप सूर्य भी प्रजा की स्थिति का हेतु है। जैसे अन्धे लोगों को प्रकाश में भी अन्धकार ही जान पड़ता है वैसे अज्ञानियों को अन्तःकरण की शक्ति का उत्तेजक भी शुक्लपक्ष ज्ञान के न होने से कृष्ण ही जान पड़ता है। इस प्रकार ज्ञानियों को कृष्णपक्ष में भी ज्ञान के आश्रय से शुक्ल पक्ष रहता है। यह सामान्य व्याप्ति पक्ष है। अमावास्या के बाद शुक्ल पक्ष और पौर्णमासी के बाद कृष्ण पक्ष होना यह विशेष पक्ष है। अमावास्या और प्रतिपदा के संधिकाल में दर्शेष्टि होती है।

उस में पूर्वपर के स्थान में हुए एकादेश को अन्तवत् मानने के तुल्य विचार से शुक्ल पक्ष की प्रधानता है। तथा पौर्णमासी और प्रतिपदा की सन्धि में पौर्णमासेष्टि की जाती है, उस में आदिवद्भाव के नियम से शुक्ल पक्ष प्रधान है। ऋषि और अनृषि स्वभाव से शुक्ल कृष्णपक्षों में इष्टि करते हैं इन में स्वभाव ही प्रेरक है॥

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः। प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते। ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते॥ १३॥

अहोरात्रः। वै। प्रजापतिः। तस्य। अहः। एव। प्राणः। रात्रिः। एव। रयिः। प्राणम्। वा। एते। प्रस्कन्दन्ति। ये। दिवा। रत्या। संयुज्यन्ते। ब्रह्मचर्यम्। एव। तत्। यत्। रात्रौ। रत्या। संयुज्यन्ते॥ १३॥

अ०—( वै ) ( अहोरात्रः ) ( प्रजापतिः ) उक्तप्रकारेण प्रजायारक्षकः कालात्मक ईश्वरः ( तस्य ) अहोरात्रस्य ( अहः,एव ) ( प्राणः ) भोक्तृशक्तिवर्द्धकः ( रात्रिः,एव ) ( रयिः ) भोग्य शक्तिप्रधानाऽतएव ( ये दिवा ) ( रत्या ) रम्य तेऽनया सा रतिस्तया स्त्रिया सह ( संयुज्यन्ते ) संयोगं कुर्वन्ति ( वै ) निश्चयेन ( एते ) ( प्राणम् ) ( प्रस्कन्दन्ति ) निर्गमयन्ति शोषयन्ति वा ( यत् ) रात्रौ,रत्या ) ( संयुज्यन्ते ) ( तत् ) ( ब्रह्मचर्यमेव अतोऽहनि मैथुनं न कार्यम्॥

भा०—दिवसस्य तैजसप्रधानत्वादुष्णाधिक्यान्मैथुनं प्रतिषिध्यते मैथुने कृतेऽन्यदपि शरीरादुष्णत्वं प्रजायते तेनोष्णद्वयेन प्राणानां शोषणं निस्सरणं वा सम्भवति। अतएव रात्रावपि दीपं प्रज्वाल्य मैथुनं न कार्यम्। अस्मादेव दिवसे मैथुनं प्रतिषिध्यते। रात्रौ च मैथुनं विहितमेव विहितस्यानुष्ठातारः शास्त्रानुकूलमाचरन्तो ब्रह्मचारिण एव सन्ति। प्रासङ्गिकोऽयं दिवामैथुनप्रतिषेधः। अहोरात्ररूपः कालविभागात्मकोऽपि सूर्यः सृष्टिस्थितिहेतुः कालात्मकः परमेश्वर एवास्ति ॥ १३ ॥

भाषार्थः—( अहोरात्रः ) एक दिन रात ( वै ) भी ( प्रजापतिः ) उक्त प्रकार से प्रजा का रक्षक कालात्मक ईश्वर है ( तस्य ) उस के दो भागों में ( अहः, एव, प्राणः ) दिनही भोक्तृशक्ति का बढ़ाने वाला जीवन का हेतु प्राण है ( रात्रिः, एव ) रात ही ( रयिः ) भोग्यशक्ति को बढ़ाने वाली प्रलयरूप है। इसी कारण अर्थात् सोमात्मक भोग्यशक्ति युक्त कामदेव के रात्रि में उत्तेजित होने और दिन में शुष्क होने से ( ये, दिवा ) जो लोग दिन में ( रत्या ) कामातुर स्त्री के साथ ( संयुज्यन्त ) संयोग करते हैं ( वै, एते ) वे निश्चय कर अपने ( प्राणम् ) प्राण को ( प्रस्कन्दन्ति ) निकालने वा सुखाने का उपाय करते हैं और ( यत् ) जो ( रात्रौ ) रात्रि में ( रत्या ) स्त्री से ( संयुज्यन्ते ) संयोग करते हैं (तत्) वह ( ब्रह्मचर्यमेव ) बल बना रहने से ब्रह्मचर्य ही है इस लिये दिन में मैथुन न करना चाहिये ॥

भा०—दिन में प्रकाश तेज रूप और गर्मी के बढ़ने से मैथुन का निषेध किया है, मैथुन करते समय शरीर से और भी गर्मी निकलती है, इस दो प्रकार की उष्णता से प्राणोंका निकलजाना या सूखना सम्भव है, इसी लिये रात्रि में भी दीपक जला के मैथुन न करे। इसी विचार से दिन में मैथुन का निषेध है। और रात्रि में मैथुन का विधान है शास्त्र की आज्ञा के अनुसार विहितका अनुष्ठान करने वाले ब्रह्मचारी ही कहाते हैं यहां दिन के मैथुन का निषेध प्रसंग से कर दिया गया है। काल विभाग दिन रात रूप, सूर्य उत्पत्ति और स्थिति का हेतु कालात्मक परमेश्वर ही है ॥ १३ ॥

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥

अन्नम्। वै। प्रजापतिः। ततः। ह। वै। तत्। रेतः। तस्मात्। इमाः। प्रजाः। प्रजायन्ते। इति ॥ १४ ॥

अ०—(वै) (अन्नम्) गोधूमयवाद्योषधीनां पक्वं फलम् (प्रजापतिः) प्रजायाः प्रादुर्भूतायाः सृष्टेरक्षकम्। अन्नात्मना सृष्टिस्थितिकर्त्ता ईश्वरः। अन्नं वै प्राणिनः प्राणाइति श्रुत्यन्तरादन्नमन्तरेण प्राणस्थितिर्भवितुमशक्या। अतएवानावृष्टिजन्यदुर्भिक्षेऽन्नमन्तरा प्राणिनां महान् क्षयो जायते (ततः, ह, वै) तस्मात्प्रसिद्धादन्नादेव (तत्) उत्पत्तिकारणम् (रेतः) वीर्यम् (तस्मात्) योषिति सिक्ताद्वीर्यात् (इमाः) प्रत्यक्षाः सर्वाः (प्रजाः) मनुष्याद्याः (प्रजायन्ते) उत्पद्यन्ते ॥

भावार्थः—तस्माद्वाएतस्मादात्मन आकाशस्संभूत आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नमन्नाद्रेतो रेतसः पुरुषः। इत्यादिक्रमेण प्राणिसृष्टिकारणानामपि कारणं परं ब्रह्म, तदेवं कुतो ह वा इमाः प्रजाः प्रजायन्त इत्यस्योत्तरं प्रदर्शितम्। प्राणिभिर्भुक्तादन्नात्परिणतं रसाद्यात्मकं भूत्वा चत्वारिंशत्तमेऽहनि सप्तमं वीर्यं धातुः परिणम्यते स्त्रीपुरुषसंयोगेन तस्मादेव वीर्यादपत्यानि जायन्ते। आकाशादिक्रमेण परब्रह्मप्रजापतिरेवान्नात्मना प्रजोत्पत्तिहेतुः ॥ १४ ॥

भावार्थः—( वै ) ( अन्नम् ) गेहूं आदि ओषधियों का फल रूप अन्न भी ( प्रजापतिः ) उत्पन्न हुई सृष्टि का रक्षक अन्न नाम रूप से संसार को स्थित रखने वाला ईश्वर है। एक श्रुति में कहा है कि प्राणी के प्राण अन्न ही हैं क्योंकि अन्न के विना प्राणों का ठहरना दुस्तर है। इसी कारण अनावृष्टि से हुए दुर्भिक्ष समय में प्राणियों का बड़ा नाश प्रलयरूप हो जाता है ( ततः, ह, वै ) उस प्रसिद्ध अन्न से ही ( तत ) उत्पत्ति का कारण ( रेतः ) वीर्य होता ( तस्मात् ) स्त्री के गर्भाशय में पहुंचाये उस वीर्य से ( इमाः ) ये प्रत्यक्ष ( प्रजाः ) मनुष्यादि प्राणी ( प्रजायन्ते ) उत्पन्न होते हैं ॥

भा०—तैत्तिरीयोपनिषद् में लिखा है कि उस सब के कारण परमेश्वर ने आकाश, आकाश से वायु, वायु से अग्नि, अग्नि से जल, जल से पृथिवी, पृथिवी से शाकरूप ओषधियां

और ओषधियों से दानारूप अन्न उत्पन्न होता और अन्न से वीर्य तथा वीर्य से शरीर बनते हैं। इस क्रम से सृष्टि के कारणों का भी कारण परब्रह्म है, सो इत्यादि कथन से [ कहां से ये प्रजा उत्पन्न होती हैं ] इस पहिले किये हुए प्रश्न का उत्तर दिया गया है। प्राणियों ने खाये हुए अन्न से विकारी हुआ अर्थात् पचा रसादि रूप हो कर चालीशवें दिन सातवां धातु वीर्य बनता है, स्त्री पुरुष का संयोग होने से उसी वीर्य से सन्तान होते हैं। सारांश यह है कि आकाशादि नाम रूप के क्रम से प्रजापति परमात्मा ही अन्नरूप से प्रजा की उत्पत्ति और रक्षा का हेतु है ॥ १४ ॥

तद्ये ह प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥

तत् । ये । ह । प्रजापतिव्रतम् । चरन्ति । ते । मिथुनम् । उत्पादयन्ते । तेषाम् । एव । एषः । ब्रह्मलोकः । येषाम् । तपः । ब्रह्मचर्यम् । येषु । सत्यम् । प्रतिष्ठितम् ॥ १५ ॥

अ०—( तत् ) पूर्वोक्तं ब्रह्मचर्यादिकम् (ह) प्रसिद्धाः (ये) जितेन्द्रियाः स्वदारनिरता जनाः ( प्रजापतिव्रतम् ) प्रजारक्षकं धर्मशास्त्रोक्तमृतौ पर्ववर्जं च भार्यागमनरूपं नियमम् (चरन्ति) सेवन्ते ( ते ) पुरुषाः ( मिथुनम् ) पुत्रपुत्रीरूपं सन्तानद्वयमपि (उत्पादयन्ते) नहि ते निर्वंशा भवन्ति । प्रायः सन्तानाभाव एतन्नियमविरुद्धानामेव भवति तथा ( येषाम् ) मनसि कर्त्तव्ये च ( तपः ) ( ब्रह्मचर्यम् ) उपस्थेन्द्रियनिग्रह-

पूर्वकं चान्द्रायणादिव्रतानुष्ठानरूपं द्वन्द्वसहन-रूपं वा तपश्चरणमेव परमं कर्त्तव्यम् ( येषु ) च (सत्यम्, प्रतिष्ठितम्) दृढं न कदाचित्किञ्चिदपि सत्यव्रताद्विचलन्ति ( तेषाम्, एव ) ( एषः ) ( ब्रह्मलोकः ) ब्रह्मणो ज्ञानं दर्शनं च भवति ॥

भा०—ये प्रजोत्पादनाय दिवामैथुनमनृतौ पर्वसु च स्त्रीसंगं न कुर्वन्ति तेऽवश्यं पुत्रवन्तो भवन्ति तदनुकूलमाचरन्त इतरेऽपि ससन्ताना भवन्तु । येच सत्यव्रता बाल्याद्ब्रह्मचारिण एव तपस्यन्ति तेषामिहैव ब्रह्मज्ञानं सम्पद्यते येन निःशङ्का आनन्दमया भवन्ति ॥ १५ ॥

भाषार्थः—( ये,ह ) जो अपनी ही स्त्री से नियम रखने वाले प्रसिद्ध जितेन्द्रिय पुरुष ( तत ) उस पूर्वोक्त ( प्रजापतिव्रतम् ) धर्मशास्त्रों में कहे पर्वों को छोड़कर ऋतु समय में अपनी स्त्री से संयोग करने रूप, प्रजारक्षक नियम का ( चरन्ति ) सेवन करते हैं ( ते ) वे पुरुष ( मिथुनम् ) कन्या पुत्र दोनों प्रकार के सन्तानों को ( उत्पादयन्ते ) उत्पन्न करते हैं वे पुरुष कभी निर्वंशी नहीं होते अर्थात् इस नियम से विरुद्ध चलने वाले ही पुरुषों के प्रायः सन्तान नहीं होते तथा (येषाम् ) जिन के मन वा चित्त में (तपः) (ब्रह्मचर्यम् ) ब्रह्मचर्य धारण पूर्वक चान्द्रायणादि व्रतों का अनुष्ठान वा भूख प्यासादि को सहना रूप तप करना ही परम सर्वोत्तम कर्त्तव्य है और ( येषु ) जिन में ( सत्यम् ) सत्य ( प्रतिष्ठितम् ) प्रतिष्ठित है जो सत्य वर्त्ताव से कभी किञ्चित् भी चलायमान नहीं होते ( तेषाम्,एव,) उन्हीं के लिये ( एषः ) यह प्रत्यक्ष

वर्त्तमान इसी शरीर में (ब्रह्मलोकः) ब्रह्म का ज्ञान वा दर्शन होता है अर्थात् जीवन्मुक्त हुये ब्रह्मज्ञान का आनन्द भोगते हैं ॥

भा०—जो लोग सन्तानों की उत्पत्ति की इच्छा से दिनमें ऋतु भिन्न समय में और पौर्णमासी आदि पर्व दिनों में स्त्री से समागम करना छोड़ देते हैं वे अवश्य पुत्रों वाले होते हैं। उन्हीं श्रेष्ठ पुरुषों के अनुकूल आचरण करते हुए अन्यलोगभी सन्तानों वाले हों। अधिक विषयासक्ति से रोगी वा अल्पवीर्य होने पर प्रायः सन्तान नहीं होते। और जो सत्याचरण के नियम में बन्धे बाल्यावस्था से ब्रह्मचारी ही रह कर तपस्या करते हैं उन को इसी जन्म में ब्रह्मज्ञान हो जाता है जिससे निःशंक आनन्द भोगते हैं ॥ १५ ॥

तेषामसौ विरजो ब्रह्मलोको न येषु जिह्म-मनृतं न माया चेति ॥ १६ ॥

तेषाम्। असौ। विरजः। ब्रह्मलोकः। न। येषु। जिह्मम्। अनृतम्। न। माया। च। इति ॥ १६ ॥

अ०—(येषु) (जिह्मम्) कौटिल्यमभिमानेर्ष्यामात्सर्यादिजन्यम् (अनृतम्) निषिद्धाचरणमगम्यागमनादिकमसत्यं च (न) नास्ति (च,माया) अन्तःकरणाद्विरुद्धाचरणं छलकपटादिकमपि (न) न विद्यते (तेषाम्) (असौ) शरीरपातानन्तरं प्राप्यं परोक्षम् (विरजः) शुद्धं निर्मलम् (ब्रह्मलोकः) ब्रह्मणो दर्शनं ज्ञानं च भवति येन ते मुक्ता इत्युच्यन्ते (इति) शब्दः प्रथमप्रश्नसमाप्तिसूचकः ॥

भा०—इतःपूर्वपद्येन सरजसि शरीरे सत्येवान्तःकरणशुद्धिद्वारा जीवन्मुक्तिदशायां ब्रह्मज्ञानं तदानन्दश्च सम्पद्यत इत्युक्तम्। अनेन च देहनाशादूर्ध्वं विरज आत्मा विरजं ब्रह्माप्नोति मुक्तो भवतीत्युच्यते ॥ १६ ॥

भापार्थः—( येषु ) जिन पुरुषों में ( जिह्मम् ) अभिमान ईर्ष्या और मत्सरतादि से हुई कुटिलता तथा ( अनृतम् ) शास्त्र विरुद्ध अगम्या स्त्री से गमन करना आदि और असत्य ( न ) नहीं है ( च ) और ( माया ) अन्तःकरणरूप आत्मा से विरुद्ध आचरण वा छल कपटादि भी ( न ) नहीं रहा ( तेषाम् ) उन के लिये ( असौ ) शरीर छूटने पश्चात् प्राप्त होने योग्य परोक्ष ( विरजः ) शुद्ध निर्मल ( ब्रह्मलोकः ) ब्रह्म का ज्ञान और दर्शन होता है जिस से वे मुक्त कहाते हैं ( इति ) यह प्रथम प्रश्न समाप्त हुआ इस का सूचक इति शब्द है ॥

भा०—इस से पूर्व श्लोक से मलिन शरीर के विद्यमान होने पर ही अन्तःकरण की शुद्धि होने से जीवन्मुक्त दशा में ब्रह्मज्ञान और उस के आनन्दभोग की सिद्धि होना कहा है और इस मन्त्र से शरीर छूटने पश्चात् निर्मल हुआ जीवात्मा निर्मल ब्रह्म को प्राप्त हुआ मुक्त होता है ॥ १६ ॥

## इति प्रथमः प्रश्नः समाप्तः ॥

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन्! कत्येव देवाः प्रजां विधारयन्ते, कतर एतत्प्रकाशयन्ते, कः पुनरेषां वरिष्ठ इति ॥ १ ॥

अथ। ह। एनम्। भार्गवः। वैदर्भिः। पप्रच्छ। भगवन्। कति। एव। देवाः। प्रजाम्। विधारयन्ते। कतरे। एतत्। प्रकाशयन्ते। कः। पुनः। एषाम्। वरिष्ठः। इति ॥ १ ॥

अ०—अधिदेवपक्षे प्राणरूपस्य प्रजापतेर्भोक्तृत्वमुक्तम् । तस्यास्मिन् शरीरे प्रजापतित्वमधिभूतपक्षेऽवधारणाय द्वितीयः प्रश्न आरभ्यते ( अथ ) कात्यायनप्रश्नस्योत्तरश्रवणानन्तरम् ( भार्गवः ) भृगुगोत्रस्थः ( वैदर्भिः ) विदर्भैः पुत्रो वैदर्भिनामा ( एनम् ) पिप्पलादम् ( पप्रच्छ ) पृष्टवान् । हे ( भगवन् ! ) (कति,एव) (देवाः) इन्द्रियाद्यधिष्ठातारो देवपदवाच्याः ( प्रजाम् ) शरीररूपामुत्पन्नां सृष्टिम् ( विधारयन्ते ) विशेषेण धारयन्ते ( कतरे ) बुद्धीन्द्रियकर्मेन्द्रिययोर्मध्ये कस्मिन्नेकतरे ( एतत ) क्रियाविशेषणम् ( प्रकाशयन्ते ) प्रकाशं कुर्वन्ति ( पुनः ) ( एषाम् ) इन्द्रियाधिष्ठातॄणां मध्ये ( कः ) (वरिष्ठः ) अतिशयेन वरः सर्वोत्तमः ( इति ) एवं पृष्टवान् ॥

भा०—आद्यप्रश्ने भोक्तृशक्तिप्रधानस्य प्राणनामरूपस्य परात्मनएवप्रजापतित्वं महत्त्वमनेकरूपत्वं चाधिदेवपक्षउक्तमिदानीं तदेवाधिभूतपक्षे द्रढयितुं प्रश्नान्तरमारभते । शरीराणां स्थितिरेव सृष्टिस्थितिः कस्तत्र मुख्यो हेतुरिति श्रोतुं प्रश्नः । इन्द्रियाधिष्ठातृषु प्रत्यगात्मविचारेण ज्ञातेष्वात्मदर्शनयोग्यतोपजायते ॥ १ ॥

भावार्थः—प्रथम प्रश्न में अधिदेव पक्ष को लेकर सूर्यात्मक

कालरूप से प्राण नामक प्रजापति का भोक्तापन कहा गया है। अब अधिभूत पक्ष को ले कर इस मानुष शरीर में प्राण का प्रजापतिपन निश्चय करने के लिये द्वितीय प्रश्न का आरम्भ करते हैं। (अथ) अब कात्यायन के प्रश्न का उत्तर सुनने पश्चात् (भार्गवः) भृगुगोत्री (वैदर्भिः) विदर्भि ऋषि का पुत्र वैदर्भि नामक ऋषि (एनम्) इन पिप्पलाद ऋषि से (पप्रच्छ) पूछते हुए कि हे (भगवन्) भगवन् ज्ञानरूप ऐश्वर्य युक्त (कति) कितने (एव) ही (देवाः) इन्द्रियादि के अधिष्ठाता देवता (प्रजाम्) शरीररूप सृष्टि को (विधारयन्ते) विशेष कर धारण करते हैं (कतरे) ज्ञानेन्द्रिय और कर्मेन्द्रियों में से किस एक में (एतत्) इस प्रकार (प्रकाशयन्ते) वस्तु ज्ञान का प्रकाश होता अर्थात् मुख्य कर शरीर यात्रा किसके आधीन है (पुनः) और (एषाम्) इन इन्द्रियादिरूप देवों के बीच (कः) कौन (वरिष्ठः) सर्वोत्तम है (इति) इस प्रकार पूछा ॥

भा०-पहिले प्रश्न में भोक्तृशक्तिप्रधान प्राण नाम रूप प्राणों के भी प्राण परमात्मा का ही प्रजापतिपन महत्त्व और अनेक रूप होना कहा है, अब उसी को अधिभूत पक्ष में दृढ़ करने के लिये द्वितीय प्रश्न का प्रारम्भ करते हैं-शरीरों की स्थिति ही सृष्टि की स्थिति है, उस स्थिति का मुख्य पति-रक्षक कौन है यह सुनने के लिये प्रश्न है। भीतरी विचार से इन्द्रियों के मुख्याधिष्ठाता को ठीक २ जान लेने से आत्मदर्शन की योग्यता होती है ॥ १ ॥

**तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥**

तस्मै । सः । ह । उवाच । आकाशः । ह । वै । एषः । देवः । वायुः । अग्निः । आपः । पृथिवी । वाक् । मनः । चक्षुः । श्रोत्रम् । च । ते । प्रकाश्य । अभिवदन्ति । वयम् । एतत् । बाणम् । अवष्टभ्य । विधारयामः ॥ २ ॥

अ०—( तस्मै ) वैदर्भये ( सः ) पिप्पलादः ( ह,उवाच ) प्रकटमिदमाह ( हवै ) ( आकाशः ) ( एषः ) ( देवः ) द्युतिमान् ( वायुः ) (अग्निः) (आपः ) ( पृथिवी ) एतानि पञ्चमहाभूतानि शरीरस्योपादानकारणानि ( वाक् ) उपलक्षणमेतदन्यकर्मेन्द्रियाणाम् ( मनः, चक्षुः, श्रोत्रम् ) ( च ) चादन्यान्यपि ज्ञानेन्द्रियाणि बोध्यानि सर्वाणीमानि प्राणिनिकायस्य स्तम्भानीव धारकाणि सन्ति सर्वेषां च देवाधिष्ठातृत्वाद्देवत्वम् ( ते ) त इंद्रियरूपा देवाः ( प्रकाश्य ) स्पर्द्धया मनुष्याइव स्वस्य महिमानं प्रख्याप्य ( वयम् ) ( एतत् ) ( बाणम् ) वा विकल्पेन आनो जीवनमस्य, यस्य जीवनमनियतं तदेतच्छरीरम् । छादनं स्थूणा इव ( अवष्टभ्य ) ( विधारयामः ) इति ( अभिवदन्ति ) प्रत्यक्षं जल्पन्ति ॥

भा०—यद्यपीन्द्रियाणि प्राणाश्चाचेतनाश्चेतनवद्वक्तुमशक्तास्तथापि तदधिष्ठातारो देवाश्चेतनास्तएवात्र प्राणेन्द्रियपदवाच्यास्तेषां सं

वादप्रदर्शनपुरस्सरं प्राणस्य महत्कृत्यं व्याचष्टे । ज्ञानकर्मेन्द्रियाधिष्ठातृभ्यः प्राणदेवस्योत्कृष्टत्वप्रतिपादनं संवादस्य तात्पर्यम् । भौतिकानीन्द्रियाण्यहङ्कारवन्ति तत्संबन्धादधिष्टातारोऽपि तादृशाः सन्ति, ते कार्यरूपा आकाशादयः करणरूपाश्च वागादयो देवाः स्वाभिमानं प्रख्याप्य वदन्ति । वयमेवेदं शरीरं चालयामः । अस्मद्धारणमन्तरेण स्थूणानिस्सारणेन छादनमिवेदं पतेत् । अयं संवादश्छान्दोग्यादौ विस्तरेणोक्तो दृश्यते ॥ २ ॥

भाषार्थः-( तस्मै ) उस वैदर्भि ऋषि के लिये ( सः ) वे पिप्पलाद ऋषि ( ह, उवाच ) प्रकट बोले कि ( ह्वै ) निश्चयकर प्रसिद्ध ( एषःदेवः ) यह प्रकाशमान ( आकाशः ) आकाशदेव ( वायुः ) वायु ( अग्निः ) अग्नि ( आपः ) जल ( पृथिवी) पृथिवी शरीर के उपादानकारण ये पञ्च महाभूत हैं (वाक्) वाणी आदि कर्मेन्द्रिय ( मनः,चक्षुः,श्रोत्रम्,च ) मन नेत्र और कान आदि ज्ञान इन्द्रिय ये सब चेतन शरीर को खम्भा के तुल्य धारण करने वाले हैं और सब के अधिष्ठाता देव होने से देव कहाते हैं उन में ( ते ) वे इन्द्रियरूप देव ( प्रकाश्य ) मनुष्यों के तुल्य अपनी महिमा को प्रकट करते हुए ईर्ष्या पूर्वक बोले कि ( वयम् ) हम लोग ( एतत् ) इस ( वाणम् ) जिस के जीवन वा स्थिर रहने में सन्देह हो कि ठहरेगा वा नहीं उस शरीर को जैसे थूनी छप्पर को वैसे ( अवष्टभ्य ) थांभकर ( विधारयामः ) विशेषता से धारण करते हैं ऐसा ( अभिवदन्ति ) समक्ष में कहते हैं ॥ २ ॥

भा०-यद्यपि इन्द्रियां और प्राण जड़ हैं वे चेतन के तुल्य नहीं बोल सकते तो भी उन के अधिष्ठाता देव चेतन हैं

वेही यहां प्राण और इन्द्रियों के वाच्यार्थ हैं, उन का संवाद दिखाने पूर्वक प्राण की महिमा दिखाते हैं। ज्ञानेन्द्रिय और कर्मेन्द्रियों के अधिष्ठातृ देवों से प्राणदेव की श्रेष्ठता दिखाना संवाद का अभिप्राय है, भौतिक इन्द्रिय अभिमानयुक्त हैं। उन के संबन्ध से उनके अधिष्ठाता देव भी अभिमान युक्त हैं। वे आकाशादि कार्य रूप और वाणी आदि करण रूप देव अपने २ अभिमान को प्रकट करके बोलते हैं कि हमी इस शरीर को चलाते हैं, इस कारण मनुष्यादि प्रजा के रक्षक होने से हमी प्रजापति हैं। हमारे धारण किये विना थूनी न रहने से निकाल लेने से छप्पर गिरजाने के तुल्य यह शरीर गिरजावे यह प्राण संवाद छान्दोग्योपनिषदादि में विस्तार से कहा दीखता है ॥ २ ॥

तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति ॥३॥

तान् । वरिष्ठः । प्राणः । उवाच । मा । मोहम् । आपद्यथ । अहम् । एव । एतत् । पञ्चधा । आत्मानम् । विभज्य । एतत् । बाणम् । अवष्टभ्य । विधारयामि । इति ॥ ३ ॥

अ०—( तान् ) इन्द्रियरूपान् देवान् ( वरिष्ठः ) अतिशयेन वरः श्रेष्ठो वास्तवेन सर्वेषूत्तमः ( प्राणः ) ( मोहम् ) ( मा, आपद्यथ ) आपद्यध्वम् । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् ( अहम्, एव ) आत्मानम् ) स्वस्वरूपम् ( पञ्चधा ) प्राणापानव्यानोदानसमानभेदैः ( विभज्य ) ( एतत्, बाणम् ) शरीरम् ( अवष्टभ्य ) उत्थाप्य ( एतत् ) क्रि-

याविशेषणम् ( विधारयामि ) विशेषेण पतना-द्वरुध्य व्यापारे प्रवर्त्तयामि ( इति ) इत्थम् ( उवाच ) ॥

भा०—प्राण एवास्मिन्कलेवरे सर्वोत्तमः स एवेदं शरीरं जीवयति प्राणमन्तरेण जीवनं कदापि न संभवति । यावच्छरीरे प्राणगमनागमने उपलभ्येते तावज्जीवतीति व्यवह्रियते निस्सृते च प्राणे मृतइत्युच्यते । मूकवधिरान्धादयस्तु जीवन्त्येव, सुषुप्तिदशायां च सर्वाणीन्द्रियाणि तमोगुणरूपेऽन्धकारसागरे निमज्जन्ति । अतएव देही न किमपि पश्यति न शृणोति न वदति न च शीतोष्णे सुखदुःखे वाऽनुभवति मनसोऽपि तदानीं तमसि लीनत्वात् । तदापि प्राण एवैको जागर्त्ति स एवान्धान्बोधयति जीवत्ययमिति । यदि प्राणोऽपि लीनःस्यात्तर्हि मरणे कः सन्देहः ? । अतः प्राण एव मुख्यो जीवनहेतुर्मनुष्यादिप्रजारक्षकत्वात्प्रजापतिरिति३॥

भाषार्थः—( वरिष्ठः ) अतिश्रेष्ठ वास्तव स्वरूप से सर्वोत्तम ( प्राणः ) प्राण ( तान् ) उन इन्द्रिय नामक देवतों से ( इति, उवाच ) ऐसे बोला कि तुम ( मोहम् ) अज्ञानाऽन्धकार को ( मा, आपद्यथ ) मत प्राप्त होओ ( अहम्, एव ) मैं ही ( आत्मानम् ) अपने स्वरूप के (पञ्चधा) प्राण, अपान, व्यान, उदान, समान, इन पांच प्रकार के नाम रूपों से (विभज्य) विभाग कर सब अवयवों में स्थित हुआ ( एतत्, बाणम् )

इस शरीर को (अवष्टभ्य) गिरने से रोककर (एतत्, विधारयामि) ऐसा धारण करता हूं जो सब काम ठीक२ चलाजावें ॥

भा०—प्राण ही इस शरीर में सब से उत्तम है वही इस प्राणी को जीवित रखता है प्राण के बिना किसी का कदापि जीवन नहीं रह सकता। जब तक शरीर में प्राण चलते हैं तब तक जीता है ऐसा कहते और प्राण के निकल जाने पर मर गया ऐसा कहते हैं। और कान आदि इन्द्रियों के बिना गूंगे बहरे अन्धे आदि तो जीते ही रहते हैं। सुषुप्तिदशा [कि जब सोते समय किसी प्रकार का स्वप्न भी नहीं होता प्रहरों समय पलों के समान कट जाता है कुछ खबर नहीं रहती वह सुषुप्तिदशा है] में सब इन्द्रिय तमोगुणरूप अन्धकार समुद्र में डूब जाते हैं, इसी कारण शरीर का अभिमानी जीव न देखता न सुनता न बोलता और गर्मी सर्दी वा सुख दुःखों का अनुभव करता है। क्योंकि उस समय मन भी तमोगुणरूप अन्धकार में लीन होजाता है, तब भी एक प्राण ही जागा करता है। वह चलता हुआ प्राण ही अन्य मनुष्यादि को जताता है कि यह जीता है यदि प्राण भी तमोगुण में लीन हो जावे तो मरने में क्या सन्देह रहे? इस से प्राण ही मुख्य जीवन का हेतु मनुष्यादि प्रजा का रक्षक होने से प्रजापति है ॥ ३ ॥

तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिꣳश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते। तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिꣳश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

ते । अश्रद्दधानाः । बभूवु । सः । अभिमानात् । उत्क्रमतेऽइव । तस्मिन् । उत्क्रामति । अथ । इतरे । सर्वे । एव । उत्क्रामन्ते । तस्मिन् । च । प्रतिष्ठमाने । सर्वे । एव । प्रातिष्ठन्ते । तद्यथा । मक्षिकाः । मधुकरराजानम् । उत्क्रामन्तम् । सर्वाः । एव । उत्क्रामन्ते । तस्मिन् । च । प्रतिष्ठमाने । सर्वाः । एव । प्रातिष्ठन्ते । एवम् । वाक् । मनः । चक्षुः । श्रोत्रम् । च । ते । प्रीताः । प्राणम् । स्तुन्वन्ति ॥ ४ ॥

अ०– ( ते ) इन्द्रियदेवाः प्राणस्य महत्त्वं निशम्याभिमानेर्ष्यायुक्ताइव ( अश्रद्दधानाः ) श्रद्धाविरहाः प्राणस्य तादृशमाहात्म्येऽविश्वस्ताः शिथिला निस्सत्त्वाः (बभूवुः) येनेदं शरीरं न चलेदिति तेन च शरीरं न पतितं प्राणे सति जीवदेवासीत्। (सः) प्राणश्चैतद्दृष्ट्वा (अभिमानात्) (उत्क्रमत,इव ) देहान्निस्सृत इव शिथिलो बभूव ( तस्मिन् ) प्राणे ( उत्क्रामति ) देहान्निःसृते ( सर्वे, एव ) इन्द्रियदेवाः ( उत्क्रामन्ते ) ( तस्मिंश्च,प्रतिष्ठमाने ) ( सर्वे,एव )( प्रातिष्ठन्ते ) ( तद्यथा ) दृष्टान्तमत्राह (मधुकरराजानमुत्क्रामन्तं सर्वा, एव, मक्षिका, उत्क्रामन्ते ) (तस्मिंश्च) मधुकरराजनि ( प्रतिष्ठमाने, सर्वा, एव ) मक्षिकाः ( प्रातिष्ठन्ते ) ( एवम् ) प्रकारेण ( वाक्, मनः, चक्षुः, श्रोत्रम्, च ) ( प्रीताः,ते ) स्वस्यापि जीवनहेतुम् ( प्राणम् ) ज्ञात्वा प्रसन्नाः सन्तो वक्ष्यमाणप्रकारेण प्राणम् ( स्तुन्वन्ति ) स्तुवन्ति ॥

भा०—चलति प्राणे मनुष्यो जीवति सदेन्द्रियाण्यपि स्वस्वकृत्यं कर्त्तुं शक्तानि भवन्ति निस्सृते च प्राणे सर्वेन्द्रियशक्तयस्तेन साकमेव देहान्निस्सरन्ति । एवं प्राणे सति मर्त्यो जीवति निस्सृते च म्रियते । एतेन सर्वोपरि महत्त्वं प्रजापतित्वंच प्राणस्यैव विज्ञातव्यम् ॥४॥

भाषार्थः—( ते ) वे इन्द्रिय रूप देव प्राण की महिमा को सुन के ईर्ष्यायुक्त मनुष्य के तुल्य ( अश्रद्दधानाः ) श्रद्धारहित प्राण की वैसी महिमा होने में अविश्वासी शिथिल (अभूवुः) होगये कि हमारे शिथिल मृतप्राय होजाने से यह शरीर न चले पर वैसा करने से शरीर गिरा नहीं किन्तु प्राण की सत्ता से जीवित बना रहा ( सः ) वह प्राण भी इन्द्रियोंके कृत्य को देखकर ( अभिमानात् ) अभिमान से (उत्क्रमत, इव) देह से निकल गया जैसा शिथिल होगया ( तस्मिन् ) उस प्राण के ( उत्क्रामति ) निकलते समय ( सर्वे, एव ) सब इन्द्रिय ( उत्क्रामन्ते ) निकल जाते ( च ) और ( तस्मिन् ) उस के ( प्रतिष्ठमाने ) बने रहने में ( सर्वएव ) सब इन्द्रिय ( प्रातिष्ठन्ते ) ठहर जाते हैं ( तद्यथा ) दृष्टान्त कहते हैं कि जैसे ( मधुकरराजानम् ) मोहार की मक्खियों में एक मक्खी राजा मानी जाती है उसके ( उत्क्रामन्तम् ) उठने पर ( सर्वा, एव, मक्षिका, उत्क्रामन्ते ) अन्य सभी मक्खी उड़ जाती हैं । ( च ) और ( तस्मिन् ) उस के ( प्रतिष्ठमाने ) कहीं बैठ जाने पर ( सर्वाएव ) सभी मक्खी ( प्रातिष्ठन्ते ) बैठ जाती हैं (एवम्) इसी प्रकार ( वाक्, मनः, चक्षुः, श्रोत्रम्, च ) वाणी मन नेत्र और कान आदि इन्द्रिय प्राण को अपने भी जीवन का हेतु राजा मान के कि इस के रहने में हमारी स्थिति और इसके

निकलते ही हमारा निकलना साथ है इस प्रकार (प्रीताः) प्रसन्न हुए (ते) वे इन्द्रिय आगे कहे अनुसार (प्राणम्) प्राण को (स्तुन्वन्ति) स्तुति करते हैं ॥

भा०—प्राण के चलते २ मनुष्य जीता है तब इन्द्रिय भी अपना २ काम दे सकते हैं और प्राण के निकलते ही सब इन्द्रियों की शक्ति उस के साथ ही शरीर से निकल जाती है। इस प्रकार प्राण के रहते मनुष्य जीता और निकलते ही मर जाता है इस से प्राण का सर्वोपरि महत्त्व तथा प्रजापति पन जानना चाहिये ॥ ४ ॥

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥५॥

एषः। अग्निः। तपति। एषः। सूर्यः। एषः। पर्जन्यः। मघवान्। एषः। वायुः। एषः। पृथिवी। रयिः। देवः। सत्। असत्। च। अमृतम्। च। यत् ॥५॥

अ०—अथ प्राणस्तुतिप्रमुखत्वेन भोक्तृशक्तेर्महत्त्वं प्रधानत्वं सर्वरूपत्वं च व्याचष्टे (एषः) भोक्तृशक्तिप्रधानः प्राणः (अग्निः) तैजसो भूत्वा (तपति) वायुमन्तरेणाग्निः प्रज्वलितुं तप्तुं वाऽशक्तः। अतएव पिहिते घटादौ प्रदीपादिर्न प्रज्वलति। इत्थमेव (एषः, सूर्यः) सूर्य रूपेण प्राणएव प्रकाशते (एषः, पर्जन्यः) मेघो भूत्वा वर्षति (एषः, मघवान्) धनवान् लोकत्रयराजेन्द्रपदवाच्यो भूत्वा प्रजाः पालयति हिनस्त्यसुररक्षांसि। मघमिति धननामास्ति निघण्टौ। भोक्तुरेव सर्वं धनं भोग्यरूपमिति (एषः,

वायुः ) वायुर्भूत्वा प्राणएव चेष्टते (एषः,पृथिवी) पृथिवीरूपेण सर्वशरीराणां धारकः (रयिः,देवः) चन्द्ररूपेण सर्वस्य पोषको दिव्यस्वरूपः ( सत् ) मूर्त्तः स्थूलः ( असत्, च ) अमूर्त्तः सूक्ष्मः (अमृतम् ) अमृतं भूत्वा देवानां स्थितिकारणं भवति ( च, यत् ) स एवं नानारूपः प्राणोऽस्ति ॥

भा०—यमन्तरेण यस्य कार्यसाधकत्वं न सम्भवति तस्य तदात्मकत्वं लोके शास्त्रे च प्रायो जना वदन्ति, मन्यन्ते च । एवमग्न्यादयः प्राणमन्तरा कार्यं साद्धुमशक्ता इति प्राणस्याग्न्यादित्वमुक्तम् । कुण्डलादौ सुवर्णमिव प्राण एवाग्न्यादिरूपेणावस्थितस्तत्तत्कार्यं साधयति सर्वं च पौरुषं प्राणिषु प्राणस्यैवास्ति पौरुषरूपेण च भगवानेव प्राणिष्ववस्थितः पौरुषंनृष्विति गीतासु, तस्मात्प्राणनामरूपो भगवानेवाग्न्यादिनामरूपैः कार्यसाधकः ॥

भाषार्थः—अब प्राण की स्तुति का प्रस्ताव पूर्वक भोक्तृशक्ति की महिमा, प्रधानता और सर्वरूप होने का व्याख्यान करते हैं—( एषः ) यह भोक्तृशक्तिप्रधान प्राण ( अग्निः ) तैजस रूप होकर ( तपति ) तपता है । वायुरूप प्राण के विना अग्नि का जलना और तपना नहीं हो सकता इसी कारण ढांपे हुए घट आदि में दीपक आदि नहीं जलता इस से अग्नि भी प्राणरूप है । इसी प्रकार ( एषः ) यह ( सूर्यः ) सूर्यरूप से भी प्राण ही सब को प्रकाशित करता है ( एषः,-

पर्जन्यः ) यह प्राण ही मेघरूप होके वर्षता है इसी लिये मेघ का नाम वायुदल [ बद्दल ] है ( एषः ) यह प्राण ही ( मघवान् ) धनवान् है यही प्राण तीनों लोक का राजा इन्द्र नामरूप होकर प्रजा का पालन तथा असुर राक्षसों का नाश करता है (एषः,वायुः) यह प्राण ही वायुरूप होकर मनुष्यादि में चेष्टा करता है (एषः, पृथिवी) यही प्राण पृथिवी रूप होकर शरीरों का धारक है ( रयिः,देवः ) आनन्ददायक चन्द्रमा रूप से सब की पुष्टि करने वाला दिव्य रूप है ( सत् ) स्थूलरूप ( असत्, च ) और सूक्ष्म ( अमृतम् ) अमृत रूप होके देवों की स्थिति का कारण है (च, यत्) इस प्रकार यह अनेक रूप प्राण है ॥

भा०—जिस के बिना जो कार्य साधक नहीं होता उसका तद्रूप होना लोक और शास्त्र में प्रायः मनुष्य कहते और मानते हैं। इस प्रकार अग्नि आदि प्राण के बिना कार्य सिद्ध नहीं कर सकते इस लिये प्राण को अग्नि आदि रूप कहा है। जैसे कुण्डलादि में सुवर्ण ही आभूषण रूप है वैसे अग्न्यादि नाम रूप से प्राण ही उस २ प्रज्वलनादि कार्य का साधक है। प्राणियों में पौरुष रूप से भगवान् ही विद्यमान हैं यह गीता में कहा है, तिस से प्राण नामरूप भगवान् ही अग्न्यादि नामरूपों से कार्य साधक है ॥ ५ ॥

अराइव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।
ऋचो यजूꣳषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥६॥

अराःइव। रथनाभौ। प्राणे। सर्वम्। प्रतिष्ठितम्। ऋचः। यजूंषि। सामानि। यज्ञः। क्षत्रम्। ब्रह्म। च ॥ ६ ॥

अ०—( रथनाभौ,अराःइव ) ( सर्वम् ) जगत ( प्राणे ) ( प्रतिष्ठितम् ) तथा ( ऋचः ) ऋग्वेदः ( यजूंषि ) यजुर्वेदः (सामानि ) सा-

भवेदः (यज्ञः) (क्षत्रम्) क्षत्रियः (ब्रह्म) ब्राह्मणः (च) चाद्वैश्यादयोऽपि सर्वे प्राणे प्रतिष्ठिताः ॥

भा०—यथा नाभिमन्तरेणाराणां स्थितिर्भवितुमशक्या तथैव ब्राह्मणक्षत्रियादि जगतः स्थितिः प्राणमन्तरेण न भवति प्राणाभावे च देहिनां ब्राह्मणादीनामभावादृग्वेदादीनामध्ययनाध्यापनप्रचाराणामसत्त्वाद्वेदानां स्थितिरपि न भविष्यति। एवं प्राणे सत्येव सर्वे स्वस्वकर्मणि प्रतिष्ठन्ते प्राण एव वेदादिषु वर्णेषु चौतः प्रोतश्च तत्तन्नामरूपेणावस्थितः प्राणात्मा भगवानेव सर्वं करोति ॥ ६ ॥

भाषार्थः—(रथनाभौ, अराइव) पुट्ठी वा पहिये की ढाम में जैसे चारों ओर को अरा लकड़ी लगी होती हैं वैसे (सर्वम्) सब जगत् (प्राणे) प्राण में (प्रतिष्ठितम्) स्थित है और (ऋचः) ऋग्वेद (यजूंषि) यजुर्वेद (सामानि) सामवेद (यज्ञः) यज्ञ (क्षत्रम्) क्षत्रिय (ब्रह्म) ब्राह्मण (च) और वैश्यादि भी सब प्राण के बीच स्थित हैं ॥

भा०—जैसे रथ के पहिये की ढाम के बिना उस में लगी अरा नामक लकड़ी नहीं ठहर सकतीं वैसे ही ब्राह्मण क्षत्रियादि जगत् की स्थिति भी प्राण के बिना नहीं होती। प्राण के न होने पर शरीरधारी ब्राह्मणादि के न रहने से ऋग्वेदादि के पढ़ने पढ़ाने वा प्रचार के न हो सकने से वेदों की स्थिति भी न होगी इस प्रकार प्राण के होने ही सब अपने २ कर्म में स्थित होते हैं। प्राणरूप भगवान् ही शब्दात्मक वेदादि में और ब्राह्मणादि वर्णों में ओतप्रोत हुआ उस २ नामरूप से विद्यमान सब कर रहा है ॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥ ७ ॥

प्रजापतिः। चरसि। गर्भे। त्वम्। एव। प्रतिजायसे। तुभ्यम्। प्राण। प्रजाः। तु। इमाः। बलिम्। हरन्ति। यः। प्राणैः। प्रतितिष्ठसि ॥ ७ ॥

अ०—हे (प्राण) आद्यविधातः! (त्वमेव) प्राणरूपेण (प्रजापतिः) प्रजापालकः सन् (गर्भे) मातुर्गर्भाशयस्थे बाले (चरसि) गर्भस्थमपि त्वमेव जीवयसि त्वमेव च (प्रतिजायसे) पितृनाम रूपः सन् पुत्रप्रकृतिरूपेण चोत्पद्यसे सर्वाधिष्ठानाधिष्ठातृप्रच्छन्न एकः प्राणरूपेण सर्वात्मा त्वमेवासि (यः) यस्त्वम् (प्राणैः) चक्षुरादिभिः सह कारणरूपेण (प्रतितिष्ठसि) भोक्ता सन् सर्वशरीरेष्ववस्थितस्तस्मै (तुभ्यम्) त्वत्प्रीत्यर्थमेव (इमाः, प्रजाः) मनुष्याद्याः (बलिम्) उपभोगम् (हरन्ति) समर्पयन्ति॥

भा०—प्रजापतिश्चरतिगर्भेअन्तरित्यादिसंहितामन्त्रे परमात्मैव प्राणरूपेण गर्भादिशरीरे प्राणिनं जीवयन् विचरतीति दर्शितम्। जीवनं सर्वभूतेष्विति गीतासूक्तम्। चेतनाधिष्ठातृरूपेण परमात्मैव प्राणात्मा सन् सर्वदेहेषु भोक्ता भूत्वाऽवस्थितस्तदर्थमेव सर्वे संघाताइन्द्रियद्वारैः सर्वं भोज्यं भोग्यं च समर्पयन्ति संघातरूपोऽहंभोक्तेत्यभिमानोऽविद्याग्रस्तत्वात्। स च

सर्वभोक्तापि सन् सर्वभोगैरलिप्तः पद्मपत्रमिवाम्भसेति ॥ ७ ॥

भावार्थः-हे ( प्राण ) आदि विधाता ( त्वमेव ) तुम ही प्राणरूप से ( प्रजापतिः ) प्रजा के रक्षक हुए ( गर्भे ) माता के गर्भाशयस्थ बालक में ( चरसि ) विचरते अर्थात् गर्भ को भी तुम ही जिलाते हो और तुम ही पितारूप हुए पुत्ररूप से ( प्रतिजायसे ) उत्पन्न होते अर्थात् सब शरीर और शरीरधारी रूप में छिपे हुए से एक तुम ही प्राणरूप से सब के अन्तर्यामी आत्मा हो । ( यः ) जो तुम ( प्राणैः ) आंख आदि इन्द्रियों के साथ कारणरूप से भोक्ता होते हुए सब शरीरों में ( प्रतितिष्ठसि ) अवस्थित हो उन ( तुभ्यम् ) तुम्हारी प्रसन्नता के अर्थ ही ( इमाः, प्रजाः ) ये मनुष्यादि प्राणी ( बलिम् ) इन्द्रियछिद्रों के मार्ग से भोगों को ( हरन्ति ) समर्पण करते हैं ॥

भा०-परमात्मा ही सब को जीवित रखता हुआ गर्भादिरूप शरीरों में प्राणरूप से विचरता है यह बात (प्रजापतिश्चरसि०) इत्यादि वेद मन्त्र में दिखायी है। यहां तात्पर्य यही जानो। गीता में कहा है कि भगवान् ही सब प्राणियों में जीवनरूप हैं। चेतन अधिष्ठातारूप से परमात्मा ही प्राणरूप बन के सब शरीरों में भोक्तारूप होकर ठहरा है। उसी भगवान् के लिये सब प्राणी इन्द्रियरूप छिद्रों के द्वारा सब प्रकार के भोगोंका समर्पण करते हैं। जड़ चेतन का संघातरूप मैं कर्त्ता भोक्ता हूं ऐसा अहंकार अविद्या ग्रस्त होने से होता है। और वह भगवान् सब का भोक्ता होता हुआ भी कमल के पत्तों के तुल्य सब भोगों से निर्लिप्त रहता है अर्थात् कोई दोष नहीं लगता॥

देवानामसिवन्हितमः पितॄणांप्रथमास्वधा ।
ऋषीणांचरितंसत्य-मथर्वाङ्गिरसामसि ॥८॥

देवानाम् । असि । वह्नितमः । पितॄणाम् । प्रथमा । स्वधा । ऋषीणाम् । चरितम् । सत्यम् । अथर्वाङ्गिरसाम् । असि ॥८॥

अ०—हे प्राण ! त्वम् ( देवानाम् ) वसुरुद्रादित्यादीनां तेभ्यः प्रेरकरूपेण ( वन्हितमः ) अतिशयेन वन्हिर्वोढा हविषां प्रापयितृतमः ( पितॄणाम् ) नान्दीमुखश्राद्धे या (स्वधा) अन्नं दीयते तद्दानस्य देवकार्यापेक्षया ( प्रथमा ) प्रथमत्वम् । नान्दीश्राद्धमारम्भे क्रियते । साधनोपचारद्वारास्वधान्नस्य प्राणरूपत्वम् । (अथर्वाङ्गिरसाम्) अङ्गिरोभूतानामथर्वणाम्—प्राणोवाऽथर्वाइतिश्रुतेः ; अङ्गिरोभूता अथर्वाणः प्राणाएव ( ऋषीणाम् ) तेषां चक्षुरादीन्द्रियरूपाणां प्राणानाम् (चरितम् ) चेष्टितम् (सत्यम्) सार्थकम्। देहधारणाद्युपकारलक्षणं सत्यं सत्यस्वरूपः त्वमेव ( असि ) वर्त्तसे ॥

भा०—महतां देवकार्याणामादौ मङ्गलार्थं नान्दीश्राद्धं विधीयते तच्च पिण्डादिरूपमन्नं प्राणस्थितिहेतुत्वात्प्राणरूपमेव । देवेभ्यो हुतसारप्रापकः सूत्रात्मा प्राणएव मुख्योऽस्ति । प्राण सत्ताश्रयेण सर्वेन्द्रियचेष्टयाऽनुष्ठीयमानं शुभं कर्म सुफलं सत्यपदप्राप्तिहेतुकं चेति प्राणस्यैव सत्यत्वम् ॥८॥

भाषार्थः—हे प्राणरूप परमात्मन् ! तुम ( देवानाम् ) वसु रुद्र और आदित्य नाम रूप देवों के बीच अर्थात् उन के

लिये प्रेरणा रूप से (वह्नितमः) विशेष कर होम किये के भार को पहुंचाने वाले हो (पितॄणाम्) नान्दीमुख श्राद्ध में पितरों को जो (स्वधा) पिण्डरूप अन्न दिया जाता है वह देवकार्य से पहिले होता है (प्रथमा) इस से आरम्भ में होने वाले नान्दीश्राद्धान्न रूप हे प्राण तुम ही हो (अथर्वाङ्गिरसाम्) अङ्गिरा और अथर्व नाम रूप वाले (ऋषीणाम्) चक्षु आदि चेतन रूप से जीवन रक्षक प्राण नामक अध्यात्म ऋषियों के (चरितम्) चेष्टा (सत्यम्) देहधारणादि उपकार का चिह्न सार्थक सत्य तुम ही (असि) हो ॥

भा०—बड़े २ देव कार्यों के आदि में नान्दीश्राद्ध का विधान है। वह श्राद्ध पिण्डादि रूप अन्नदान प्राण स्थिति का हेतु होने से प्राण रूप ही है। देवों के लिये होम किये पदार्थों का सारांश पहुंचाने वाला सूत्रात्मा प्राण ही मुख्य है। प्राण की सत्ता के सहारे से ही सब इन्द्रियों की चेष्टा द्वारा होने वाला शुभकर्म सुफल तथा सत्य परमात्मारूप पदप्राप्ति का हेतु होने से प्राण ही सत्य स्वरूप है। वास्तव में यहां प्राण नाम रूप से सर्व चेष्टा के निमित्त परमात्मा की महिमा दिखायी है ॥ ८ ॥

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।
त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषाम्पतिः ॥९॥

इन्द्रः । त्वम् । प्राण तेजसा । रुद्रः । असिः । परिरक्षिता । त्वम् । अन्तरिक्षे । चरसि । सूर्यः । त्वम् । ज्योतिषाम् । पतिः ॥९॥

अ०—हे (प्राण, त्वम्) (तेजसा) बलेन वीर्येण सर्वधारकः (इन्द्रः) परमेश्वरएवासि (रुद्रः) मरणादिसंहारकाले त्वमेव रुद्रात्मा (असि) स्थितिकाले त्वमेव मनुष्यादिजन्तूनाम् (परि-

रक्षिता ) सर्वतो रक्षकस्त्वयि तिष्ठति न कथञ्चिन्म्रियते ( त्वम् ) ( अन्तरिक्षे ) महदाकाशे सूर्यात्मना प्रतिक्षणम् (चरसि) ( त्वम् ) (ज्योतिषाम् ) चन्द्रनक्षत्रादीनाम् ( पतिः ) स्वप्रकाशदानेन रक्षको भोक्तृशक्तिप्रधानः ( सूर्यः) सूर्यरूपोऽसि ॥

भा०—उत्पत्तिस्थितिविनाशकाले प्राणएव सर्वस्योत्पत्त्यादिकं करोति ब्रह्मेन्द्रविष्णुरुद्रसूर्यादिविग्रहरूपेण प्राणात्मको भगवानेव जगदुत्पत्त्यादिकं सर्वं सत्तामात्रेण करोति ॥ ९ ॥

भाषार्थः—हे ( प्राण त्वम् ) प्राण तुम (तेजसा) अपने बल पराक्रम से सब के धारक ( इन्द्रः ) परमेश्वर ही हो, ( रुद्रः) मरणादि प्रलयकाल में तुम ही रुद्ररूप ( अग्नि ) हो, संसार की स्थिति समय में तुम ही मनुष्यादि जीवों के ( परिरक्षिता ) रक्षक अर्थात् तुम्हारे स्थित रहते कोई नहीं मर सकता, इस से विष्णु रूप रक्षक तुम ही हो ( त्वम् ) तुम (अन्तरिक्षे ) महान् आकाश में प्रतिक्षण सूर्यरूप से ( चरसि ) विचरते हो ( त्वम् ) तुम ( ज्योतिषाम् ) चन्द्रमा नक्षत्रादि ज्योतियों के (पतिः) अपने प्रकाश से रक्षा करने वाले भोक्ता रूप होने से ( सूर्यः ) सूर्यरूप तुम ही हो ॥

भा०—उत्पत्ति स्थिति और प्रलय समय में प्राण ही सब की उत्पत्ति आदि करने वाला है। ब्रह्मा इन्द्र विष्णु रुद्र और सूर्य नाम रूप से जीवनरूप प्राण भगवान् ही सब संसार का उत्पत्ति आदि सब काम अपनी सत्तामात्र से करते हैं ॥९॥

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।
आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति१०

यदा । त्वम् । अभिवर्षसि । अथ । इमाः । प्राण । ते । प्रजाः । आनन्दरूपाः । तिष्ठन्ति । कामाय । अन्नम् । भविष्यति । इति ॥ १० ॥

अ०—हे (प्राण !) ( यदा, त्वम् ) पर्जन्यो-भूत्वा ( अभिवर्षसि ) ( अथ ) तदानीम् (ते) तव ( इमाः ) मनुष्याद्याः ( प्रजाः ) (कामाय) अस्माकं कामनापूर्त्तये, अस्माद्वर्षणात् ( अन्नम् ) ( भविष्यति, इति ) मत्वा ( आनन्दरूपाः) (तिष्ठन्ति) निराकुलाः सुखं प्राप्ता भवन्ति॥

भा०—सर्वस्य गमनागमननिमित्तो वायुरेवेत्युक्तम् । वायोः सङ्घर्षादेव वृष्टिर्जायते । वृष्टौ सत्यामेवौषध्यन्नाद्युत्पत्त्या प्राणिमात्रस्य सुखं जायतेऽतो वायुरूपः प्राण एव सर्वेषां सुखस्य मूलम् । वर्षणेनान्नोत्पत्तिः सृष्टिस्थितिकारणं तेन रक्षास्थितिहेतुत्वात्प्राणस्येश्वरत्वं प्रजापतित्वं च सिद्धम् । भगवान् प्राणरूपेणैव रक्षति १०

भाषार्थः—हे ( प्राण ) प्राण ( यदा,त्वम् ) जब तुम मेघ रूप होके ( अभिवर्षसि ) मेघ जल को पृथिवी पर गिराते वर्षाते हो ( अथ ) तब ( ते) तुम्हारी ( इमाः ) ये मनुष्यादि ( प्रजाः ) प्रजा ( कामाय ) हमारी कामना पूरी होने के लिये इस वर्षा से ( अन्नम्, भविष्यति ) अन्न उत्पन्न होगा ( इति ) ऐसा मान के ( आनन्दरूपाः ) आनन्द में मग्न व्याकुलता रहित सुखपूर्वक ( तिष्ठन्ति ) स्थित होती हैं ॥

भा०—सब के जाने आने का निमित्त वायु ही है, यह कह चुके हैं वायु के बद्दल लड़ाने से ही वृष्टि होती है । वृष्टिके होने से ही ओषधि वा अन्नादिकी उत्पत्ति से प्राणीमात्र को

सुख होता है इस से वायुरूप प्राण ही सब के सुख का मूल है। वर्षा से हुई अन्न की उत्पत्ति ही संसार को स्थित रखने वाली है। जिस से रक्षा तथा स्थिति का हेतु होने से प्राण ही ईश्वर प्रजापति है, अर्थात् भगवान् प्राणरूप से ही सब की रक्षा करते हैं ॥

व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः।
वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः ॥११॥

व्रात्यः। त्वम्। प्राण। एकः। ऋषिः। अत्ता। विश्वस्य। सत्पतिः। वयम्। आद्यस्य। दातारः। पिता। त्वम्। मातरिश्वनः ॥ ११ ॥

अ०—हे (प्राण) (त्वम्, व्रात्यः) असंस्कार्यो नित्यशुद्धः (एकः) अनेकप्राणिष्वेकरूपः (ऋषिः) वैश्वानराद्यग्निरूपेण (अत्ता) भोक्ताहविरन्नादेः (विश्वस्य) (सत्पतिः) सर्वोत्तमो रक्षकः सर्वस्य सतो वा पतिः (वयम्) (आद्यस्य) तव भक्ष्यस्यान्नादेः। (दातारः) (त्वम्) (मातरिश्वनः) वायोः (पिता) जनकः। यस्य वातः प्राणापानावित्यादिवेदमन्त्रेण ज्ञायते, ईश्वरस्य प्राणापानरूपोवायुरेवास्ति ॥

भा०—अनेकप्राणिष्वेकरूपाय वायुरूपेण भगवदात्मकाय प्राणायेन्द्रियाण्यन्नमादाय ददति तेन प्राणस्य रक्षणं जायते प्राणश्चान्नं निगलति ॥ ११ ॥

भाषार्थः—हे (प्राण) प्राण (त्वं, व्रात्यः) तुम संस्कार करने योग्य न होने से नित्य शुद्ध (एकः) अनेक प्राणियों में एक रूप (ऋषिः) जाठरादि अग्नि के रूप में आकर (अत्ता)

हविरूप अन्नादि के भोक्ता (विश्वस्य) संसार के (सत्पतिः) सर्वोत्तम रक्षक या विद्यमान सब जगत् के रक्षक हो (वयम्) हम लोग (आद्यस्य) तुम को खाने योग्य अन्नादि के (दातारः) देने वाले हैं (त्वम्) तुम (मातरिश्वनः) वायु के (पिता) पिता हो। परमेश्वर का प्राण अपानवायुरूप ही है इत्यादि वेदमन्त्र के प्रमाण से जाना गया कि प्राण वायु भी भगवद्रूप ही है ॥

भा०—अनेक प्राणियों में वायु के रूप से विद्यमान एक भगवत्स्वरूप प्राण के लिये हाथ आदि इन्द्रियां अन्न लेकर देती हैं, जिस से प्राण की रक्षा होती है और प्राण अन्न को कण्ठ से नीचे उतारता है ॥ ११ ॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोते या च चक्षुषि। या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥

या। ते। तनूः। वाचि। प्रतिष्ठिता। या। श्रोत्रे। या। च। चक्षुषि। या। च। मनसि। सन्तता। शिवाम्। ताम्। कुरु। मा। उत्क्रमीः ॥ १२ ॥

अ०—हे प्राण! (ते) तव (या) अपानरूपा (वाचि, प्रतिष्ठिता) (या) व्यानरूपा (श्रोत्रे) (या, च) प्राणरूपा (चक्षुषि (या, च) समानरूपो (मनसि) (सन्तता) मनोवृत्तिषु विस्तृता (तनूः) स्वरूपम् (ताम्) (शिवाम्) शान्तां स्थिरां कल्याणकारिणीम् (कुरु) (मा, उत्क्रमीः) उत्क्रमणं मा कुरु। तवोत्क्रमणेन सर्वासांतनूनामुत्थानादस्माकमिन्द्रियाणामपि जीवनमसम्भवम् ॥

भा०—यया नाड्याऽधस्तादपानवायुर्निस्सरति तयैवोपरिष्टाद्वाक् च। अतएव प्रवृत्तायां वाच्यपानवायुर्न निस्सरति। अतएवोक्तं गुदेऽपान इति। व्यानः श्रोत्रसञ्चारी येन शब्दः श्रूयते। नेत्ररश्मिप्रसारकः प्राणः। समोनवायुरिन्द्रियेषु मनश्चालयति। एवं प्राणस्यावान्तरभेदेष्वपानादिषु विकलेषु वागादीन्द्रियाणि स्वस्वकर्मणि न प्रवर्त्तन्ते निस्सृते चापानादाविन्द्रियाण्यपि सहैव निस्सरन्ति स्वस्थेषु चावतिष्ठन्ते। अपानादिनामरूपैर्भगवानेव वागादिष्ववस्थितः सर्वं प्राणिजातं रक्षति भगवत्स्मरणेनैवापानादिषु शान्तिर्भवति ॥ १२ ॥

भाषार्थः—हे प्राण! (ते) तुम्हारा (या) जो अपानरूप (वाचि) वाणी में (प्रतिष्ठिता) स्थित है (या) जो व्यान नामक (श्रोत्रे) कान में (च) और (या) जो प्राण नामक (चक्षुषि) नेत्र में (च, या) और जो समानरूप (मनसि) मन की वृत्तियों में (सन्तता) विस्तृत (तनूः) स्वरूप है (ताम्) उस को (शिवाम्) स्थिर वा कल्याणकारी (कुरु) करो (मा, उत्क्रमीः) शरीर से मत निकलो। तुम्हारे निकलने में सब अपानादि के निकल जाने से हम इन्द्रियों का भी जीवित रहना असम्भव है ॥

भा०—जिस नाड़ी से नीचे को अपानवायु निकलता है उसी नाड़ी से ऊपर को वाणी निकलती है। इसीलिये कहा है कि गुदेन्द्रिय में अपान रहता है, इसी कारण बोलते समय अपान वायु नहीं निकल सकता, अपान के निकलते समय बोलना रोकना पड़ता है। जिस से शब्द सुन पड़ता है वह कानों में विचरने वाला व्यान कहाता है। नेत्र की किरणों का च-

लाने वाला प्राण, और समान वायु मन को इन्द्रियों के साथ चलाता है। इस प्राण के अवान्तर भेद अपानादि के निकल होने से वाणी आदि इन्द्रिय अपने २ कर्मों में प्रवृत्त नहीं होते और अपानादि के निकलने से इन्द्रिय भी साथ ही निकल जाते हैं। तथा स्वस्थ रहने से इन्द्रिय भी स्वस्थ हो जाते हैं। अपानादि नाम रूपों से भगवान् ही सब वाणी आदि में ठहरे हुए सब प्राणीमात्र की रक्षा करते हैं इस कारण भगवत्स्मरण से ही अपानादि में शान्ति आती है ॥ १२॥

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्।
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ १३ ॥

प्राणस्य। इदम्। वशे। सर्वम्। त्रिदिवे। यत्। प्रतिष्ठितम्। माताऽइव। पुत्रान्। रक्षस्व। श्रीः। च। प्रज्ञाम्। च। विधेहि। नः। इति ॥ १३ ॥

अन्वयः—अस्मिन्मृत्युलोके ( यत् ) स्थावरजङ्गमम् ( प्रतिष्ठितम् ) अवस्थितम्। यच्च ( त्रिदिवे ) तृतीये स्वर्गलोके देवादिकमुपभोगलक्षणं तत् ( इदम्, सर्वम् ) (प्राणस्य) (वशे) वर्त्तते, प्राणरूपेण भगवानेव सर्वस्येशिता स्वामी। तदर्थं हे प्राण जीवनस्थितिस्वरूप भगवन्! ( माता, पुत्रानिव ) अस्मान् ( रक्षस्व ) ( नः ) अस्मभ्यम् ( श्रीः, च ) राज्यादिक्षत्रधर्मशोभाम् ( प्रज्ञाम् ) स्वात्स्थितिनिमित्तां बुद्धिं वेदादिशास्त्रज्ञानं ब्रह्मधर्मवृद्धिम् (च) (विधेहि), ( इति ) प्रश्नसमाप्तिसूचकः ॥

भा०—प्रत्यक्षपरोक्षसर्वलोकेषु देवर्षिपितृमानवादिरूपः सर्वः स्थावरजङ्गमः संसारः प्राण-

रूपस्य परमात्मनएवाधारे तिष्ठति तेनैव सर्वं चेष्टते। विद्यमानः प्राणएव सर्वं रक्षति निस्सृतेच तस्मिन् सर्वं विनष्टमिति । ब्रह्मक्षत्रादिजगतः समृद्धिहेतुर्मुख्यः प्राण एवास्ति। देवादिसृष्टौ प्राणोऽपि तादृशएव दिव्यः सूक्ष्मश्चास्ति ॥ १३ ॥

भाषार्थः—इस मृत्यु लोक में (यत्) जो चराचर जगत् (प्रतिष्ठितम्) अवस्थित है और जो (त्रिदिवे) तीसरे स्वर्गलोक में भोगार्थ देवादियोनि हैं (इदम्, सर्वम्) यह सब (प्राणस्य, वशे) प्राण के ही वश में वर्त्तमान अर्थात् प्राण रूप से भगवान् ही सब के स्वामी सब को वश में रखने वाले हैं प्राण ही तीनों लोकका धारण करने वा चलाने वाला है। इस लिये हे प्राण जीवन रूप भगवान् (माता, पुत्रानिव) पुत्रों को माता के तुल्य हमारी (रक्षस्व) रक्षा करो (नः) हमारे लिये (श्रीः, च) राज्यादि क्षत्रधर्म की शोभा (च) और (प्रज्ञाम्) तुम को स्थित रखने वाली बुद्धि तथा वेदादिशास्त्र के ज्ञानरूप ब्राह्मण धर्म की वृद्धि को (विधेहि) कीजिये (इति) इस शब्द से द्वितीय प्रश्न की समाप्ति सूचित होती है ॥

भा०—प्रत्यक्ष परोक्ष सब लोकों में देव, ऋषि, पितर, मनुष्यादि रूप चर अचर सब संसार प्राण रूप परमात्मा के ही आधार में स्थित है उस की सत्ता से ही सब कोई चेष्टा करता है। विद्यमान रहता हुआ प्राण ही सब की रक्षा करता है और उस के निकलजाने पर सब का नाश हो जाता है। ब्राह्मण क्षत्रियादि जगत् की वृद्धि का मुख्य हेतु प्राण ही है देवादि सृष्टि में प्राण भी वैसा ही दिव्य तथा सूक्ष्मरूप है वही उन की रक्षा औरस्थिति का हेतु है ॥ १३ ॥

इति द्वितीयः प्रश्नः समाप्तः ॥

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भगवन् कुत एष प्राणो जायते कथमायात्यस्मिञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ १ ॥

अथ । ह । एनम् । कौसल्यः । च । आश्वलायनः । पप्रच्छ । भगवन् । कुतः । एषः । प्राणः । जायते । कथम् । आयाति । अस्मिन् । शरीरे । आत्मानम् । वा । प्रविभज्य । कथम् । प्रातिष्ठते । केन । उत्क्रमते । कथम् । बाह्यम् । अभिधत्ते । कथम् । अध्यात्मम् । इति ॥ १ ॥

अ०—( अथ ) वेदर्षिकृतप्रश्नस्योत्तरश्रवणानन्तरम् ( आश्वलायनः, कौसल्यः ) कौसल्याभिधोऽश्वलस्य पुत्रः ( एनम् ) पिप्पलादं वक्ष्यमाणप्रकारेण ( पप्रच्छ ) हे ( भगवन् ! ) ( एषः, प्राणः ) ( कुतः ) कस्मात् ( जायते ) ( अस्मिन्, शरीरे, कथम्, आयाति ) अस्य शरीरग्रहणे किं निमित्तम् शरीरे प्रविष्टश्च (आत्मानम् ) स्वस्वरूपम् ( प्रविभज्य ) (कथम् ) केन प्रकारेण (प्रातिष्ठते) शरीरेऽवस्थितः (केन) वृत्तिविशेषेणास्माच्छरीरात् ( उत्क्रमते ) ( कथम् ( बाह्यम् ) अधिभूतमधिदैवं च ( कथम् ) च ( अध्यात्मम् ) सुखदुःखादिकम् (अभिधत्ते) धारयति । इत्येवं मे प्रश्नाः सन्तीति ॥

भा०—द्वितीयप्रश्ने प्राणनामरूपस्य प्रजापतित्वं स्वामित्वं महत्त्वमनेकरूपत्वं चोक्तमिदानीं तस्य शरीरे यथावस्थितिस्तथा व्याख्यायते ॥ १ ॥

भावार्थः—(अथ) अब वैदर्भिकृत प्रश्न का उत्तर सुनने पश्चात् (आश्वलायनः, कौसल्यः) अश्वल ऋषि के पुत्र कौसल्य ने (एनम्) इन पिप्पलाद ऋषि से (पप्रच्छ) पूछा कि हे (भगवन्!) उत्तम ज्ञानी (एषः) यह प्राण (कुतः) किस से (जायते) उत्पन्न होता और (अस्मिन्, शरीरे, कथम्, आयाति) इस शरीर में कैसे आता है अर्थात् शरीर धारण क्यों करता है तथा शरीर में प्रविष्ट हुआ (आत्मानम्) अपने स्वरूप का (प्रविभज्य) विभाग कर (कथम्) किस प्रकार (प्रातिष्ठते) शरीर में अवस्थित होता और (केन) किस वृत्ति विशेष के साथ इस शरीर से (उत्क्रमते) निकलता तथा (कथम्) कैसे (बाह्यम्) आधिभौतिक तथा आधिदैविक अंश को और (कथम्) कैसे (अध्यात्मम्) मानस सुख दुःखों को (अभिधत्ते) धारण करता (इति) इस प्रकार मेरे प्रश्न हैं ॥

भा०—द्वितीय प्रश्न में प्राण नाम रूप प्रजापति का स्वामीपन महत्व और अनेक रूप होना कहा है, अब इस तृतीय प्रश्न में जिस प्रकार उस प्राण की शरीर में स्थिति रहती है वैसी व्याख्या करते हैं ॥ १ ॥

तस्मै स होवाचातिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

तस्मै । सः । ह । उवाच । अति । प्रश्नान् । पृच्छसि । ब्रह्मिष्ठः । असि । इति । तस्मात् । ते । अहम् । ब्रवीमि ॥ २ ॥

अ०—(तस्मै) कौसल्याय (स, ह) पिप्पलादः (ह, उवाच) प्रकटमुवाच (अति, प्र-

श्नान्) कठिनान् प्रश्नान् (पृच्छसि) नहि साधारण एवं प्रष्टुमर्हति तेनाहं जाने त्वम् (ब्रह्मिष्ठः) अतिशयेन ब्रह्मज्ञः (असि) (इति) (तस्मात्) (ते) तुभ्यम् (अहम्) (ब्रवीमि) ज्ञानमुपदिशामि ॥

भा०—प्राण एव तावद् दुर्विज्ञेयस्तस्यापि त्वं जन्मादि पृच्छस्ययमतिप्रश्नः । भाषणेनैव सर्वस्य बुद्धिमत्त्वं निर्बुद्धित्वं च परीक्ष्यते कौसल्येन च यत्पृष्टं तेन तस्य ज्ञानार्हत्वं बुद्धिमत्त्वं च प्रतीयते ॥ २ ॥

भाषार्थः—(तस्मै) उस कौसल्य ऋषि से (सः) वे पिप्पलाद (ह, उवाच) प्रकट बोले कि तुम (अतिप्रश्नान्) अति कठिन प्रश्न (पृच्छसि) पूछते हो। साधारण मनुष्य ऐसे प्रश्न नहीं कर सकता (इति) तिस से मैं जानता हूं कि तुम (ब्रह्मिष्ठः) विशेष कर ब्रह्मज्ञान की योग्यता रखते (असि) हो (तस्मात्) इस कारण (ते) तुम से (अहम्) मैं (ब्रवीमि) ज्ञान का उपदेश करता हूं ॥

भा०—जब कि प्राण का जानना ही कठिन है तब उस का जन्मादि पूछना यही अतिप्रश्न है बोलने से ही सब की बुद्धिमत्ता वा निर्बुद्धिता की परीक्षा हो जाती है। कौसल्य ऋषि ने जो पूछा उस से उन के ज्ञान की योग्यता और बुद्धिमत्ता प्रतीत होती है ॥ २ ॥

आत्मन एष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥

आत्मनः । एषः । प्राणः । जायते । यथा । एषा । पुरुषे । छाया । एतस्मिन् । एतत् । आततम् । मनोकृतेन । आयाति । अस्मिन् । शरीरे ॥ ३ ॥

अ०—( आत्मनः ) परमात्मनः परमेश्वरात् ( एषः ) प्रत्यक्षं चेष्टमानः ( प्राणः ) (जायते) उत्पद्यते [एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुत्यन्तरादवगन्तव्यम् ] दृष्टान्तमत्राह ( यथा ) ( पुरुषे ) शरीरे निमित्ते सति ( छाया ) नैमित्तिकी जायते नासति तथैवात्मनि सति प्राणो जायते तद्वत् ( एतस्मिन् ) ब्रह्मणि ( एतत् ) प्राणाख्यं कल्पितं छायास्थानीयममृतरूपं सत्ये पुरुषे ( आततम् ) समर्पितम् । ( अस्मिन् ) ( शरीरे) (मनोकृतेन) मनसः शुभाशुभवासनारज्जुभिराकृष्यमाणो मनः संकल्पेच्छादिनिष्पन्नकर्मनिमित्तेन । (आयाति ) शरीरेण सम्बध्यते ॥

भा०—परमात्मसत्तयैव प्राणादिसर्वमुत्पद्यते स्थीयते च प्राणोऽत्र जीवनरूपः परमात्मनश्छायास्थानीयो भवितुमर्हति सएव परमात्मसत्तया चेतनः सन् चक्षुरादिषु प्राणादिनामरूपेण दर्शनादि कारयति । मनःसंकल्पजन्ये कर्मणि सति शुभाशुभफलभोगाय शरीरमुत्पद्यते तच्च सप्राणमेव फलं भोक्तुं शक्तमतः प्राणस्य शरीरेण भोगार्थमेव सम्बन्ध इति युज्यते ॥३॥

भाषार्थः—( आत्मनः ) सर्वान्तर्यामी परमेश्वर से ( एषः ) यह ( प्राणः ) प्राण ( जायते ) उत्पन्न होता । एक अन्य श्रुति में लिखा है कि इस परमेश्वर से प्राण मन, और इन्द्रिय होते हैं । इस में दृष्टान्त कहते हैं कि ( यथा ) जैसे ( पुरुषे ) शरीर के निमित्त रूप होने पर ( छाया ) नैमित्तिकी छाया होती किन्तु न होने से नहीं होती वैसे ही आत्मा के होते प्राण होता है वैसे ही (एतत्) यह मिथ्या कल्पित छाया स्थानी प्राणात्मक जीवन (एतस्मिन्) इस सत्य पुरुष परमात्मा ब्रह्म में ( आततम् ) समर्पित है अर्थात् छाया वाले के आधीन छाया होने के तुल्य प्राणात्मक जीवन ब्रह्म के आधीन है ( अस्मिन्, शरीरे ) इस शरीर में ( मनोकृतेन ) मन की शुभाशुभ वासना रूप रश्मियों से बांधा खींचा हुआ मन के संकल्पानुकूल हुई इच्छा जन्य कर्मबन्धन से (आयाति) शरीर के साथ सम्बद्ध होता है ॥

भा०—परमात्मा की सत्ता से ही प्राणादि सब उत्पन्न होते वा स्थिति होती प्राण पद से परमात्मा का छाया स्थानी जीवन जानो, वही छाया स्थानी हो सकता है । वही परमात्मसत्ता से चेतन सा हुआ चक्षु आदि में प्राणादि नामरूप से देखना आदि काम करता है । मन के संकल्प से हुए सञ्चित कर्म के होते ही शुभ अशुभ फल भोग के लिये शरीर उत्पन्न होता है वह शरीर प्राण सहित नाम सजीव रहने पर ही फल भोग सकता है इस कारण शरीर के साथ प्राण नामक जीव का सम्बन्ध भोग के लिये ही होता है ॥ ३ ॥

यथा सम्राडेवाधिकृतान् विनियुङ्क्ते । एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राणः । इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते ॥ ४ ॥

यथा । सम्राट् । एव । अधिकृतान् । विनियुङ्क्ते । एतान् । ग्रामान् । एतान् । ग्रामान् । अधितिष्ठस्व । इति । एवमेव । एषः । प्राणः । इतरान् । प्राणान् । पृथक्पृथक् । एव । सन्निधत्ते ॥४॥

अ०—आत्मानं प्रविभज्य कथं प्रातिष्ठत इत्युक्तं तस्यानेनोत्तरं सदृष्टान्तमुपपादयति—(यथा, सम्राट्) (अधिकृतानेव) अधिकारिण एव स्वस्वकर्मणि (एतान्, ग्रामान्) (एतान्, ग्रामान्) (अधितिष्ठस्व) एतेषां ग्रामाणां त्वमधिपतिर्भवैतेषां च त्वम् (इति) एवं प्रकारेण (विनियुङ्क्ते) नियोजयति (एवम्) तथैव (एषः, प्राणः) मुख्यो जीवनरूपः। (इतरान्, प्राणान्) जीवनहेतून् चक्षुरादीनात्मभेदान् (पृथक्पृथगेव) स्वस्वकर्मणि स्थाने च (सन्निधत्ते) नियोजयति ॥

भा०—सर्वेषु मुख्यः प्राणोजीवनरूप इति पूर्वमेवोक्तं मुख्य एव तस्मिन् समुदाये राजा भवति। अस्मिन् कलेवरे प्राण एवेन्द्रियाणां राजा स तत्तदिन्द्रियं तस्य तस्य कर्मणि स्थाने च स्वशक्त्या विनियोजयति। अर्थात् प्राण एव चक्षुरादिभेदेनावस्थायेदं चालयति ॥ ४ ॥

भाषार्थः—प्राण अपना भेद कर कैसे शरीर में स्थित रहता है यह प्रश्न कह चुके हैं उस का उत्तर इस मन्त्र से दृष्टान्तपूर्वक कहा जाता है ( यथा, सम्राट् ) जैसे बड़ा राजा (अधिकृतानेव ) अधिकारियों को ही उन २ के काम में ( एता,

न् प्राणान् एतान्, प्राणान् अधितिष्ठस्व ) इन प्रामों के तुम और इन ग्रामों के तुम अधिपति [ कोटवाल आदि ] होओ ( इति ) इस प्रकार ( विनियुङ्क्ते ) नियुक्त करता है ( एवम् ) वैसे ही ( एषः, प्राणः ) यह मुख्य जीवनरूप प्राण ( इतरान्, प्राणान् ) अन्य अपानादि वा जीवन के हेतु नेत्र आदि अपने अंशरूपों को ( पृथक् पृथगेव ) अलग २ अपने कर्म वा स्थान में ( सन्निधत्ते ) नियुक्त करता है ॥

भा०—सब इन्द्रिय आदि में जीवनरूप प्राण मुख्य है यह पहिले ही कह चुके हैं और समुदाय में मुख्य और बलवान् ही राजा होता है। इस शरीर में भी यही मुख्य प्राण इन्द्रियों का राजा है। वह उस २ इन्द्रिय को उस २ के कर्म और स्थान में अपनी शक्ति से नियत करता अर्थात् प्राण ही नेत्र आदि अपने भेद से शरीर में स्थित होके इस शरीर को चला रहा है ॥ ४ ॥

पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समन्नयति, तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

पायूपस्थे । अपानम् । चक्षुःश्रोत्रे । मुखनासिकाभ्याम् । प्राणः । स्वयम् । प्रातिष्ठते । मध्ये । तु । समानः । एषः । हि । एतत् । हुतम् । अन्नम् । समम् । नयति । तस्मात् । एताः । सप्त । अर्चिषः । भवन्ति ॥ ५ ॥

अ०—( पायूपस्थे ) पायुश्चोपस्थश्च तस्मिन् ( अपानम् ) अपानवायुर्विण्मूत्रे उत्सृजँस्तिष्ठति ( चक्षुःश्रोत्रे ) चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं

तस्मिन् । उभयत्र प्राणयुक्तत्वादेकवद्भावः (मुख-नासिकाभ्याम् ) निस्सरन् ( प्राणः,स्वयम् ) राजस्थानीयः ( प्रातिष्ठते ) अवस्थितो भवति (तु) (मध्ये) पायूपस्थचक्षुःश्रोत्रयोरन्तराले ना-भिप्रदेशे(समानः) तिष्ठति (एषः, हि) समानएव ( एतत ) ( हुतम् ) भुक्तंपीतंच ( अन्नम् ) अन्नमुदकंच्च ( समम् ) रसादिनिस्सारणेन य-थास्थानंन् ( नयति ) ( तस्मात् ) समं नीता-द्भुक्तादन्नाद्रसाद्यात्मकाद्धातुरूपात् ( एताः ) ( सप्त, अर्चिषः ) दर्शनादिविषयप्रकाशिका दी-प्तयः [चक्षुरादीनीन्द्रियाणि] ( भवन्ति ) स्व-स्वकार्यसाधनाय प्रभवन्ति॥

भा०—अनेन प्राणापानसमानानां स्थितिः शरीरे यत्र यथा च भवति तद्दर्शयति । चक्षुषि श्रोत्रे च मुखनासिकाभ्यां निस्सरन् राजसद्मनि राजेव मुख्योजीवनरूपः प्राणस्तिष्ठति पायावुपस्थे च विण्मूत्रार्त्तवशुक्रादिकं विमुञ्चन्नानन्दमनुभावयन्नपानस्तिष्ठति । एतद्द्वयोर्मापेन मध्ये भुक्तान्नं पचन्समानस्तिष्ठति । यथा शैलात्सप्त स्रोतांसि प्रभवन्ति तथैव हृदयस्थसमानवायुकृतव्यापाराच्छिरःस्थानि सप्तस्रोतांसि स्वस्वविषयग्राहकाणि चक्षुरादीनीन्द्रियाणि प्रभवन्ति ॥ ५ ॥

भावार्थः—( पायूपस्थे ) गुदा और उपस्थ [ लिङ्ग, भग दोनों का नाम है ] में ( अपानम् ) विष्ठा मूत्र का त्याग कराता हुआ या विषयानन्दानुभव का हेतुरूप अपानवायु स्थित रहता ( मुखनासिकाभ्याम् ) मुख और नाक द्वारा निकलता हुआ (चक्षुःश्रोत्रे) आंख और कान में ( स्वयम्, प्राणः) प्राण स्वयं राजास्थानी ( प्रातिष्ठते ) स्थित रहता ( तु ) और ( मध्ये ) गुदा और मुख के बीच नाभि में ( समानः ) समानवायु स्थित होता है ( एषः, हि ) यह समान ही ( एतत् ) इस ( हुतम् ) खाये पिये हुए ( अन्नम् ) अन्न जल को ( समम् ) पचाता हुआ रसादि निकाल कर सब धातुओं को ठीक २ ( नयति ) अवस्थित करता है ( तस्मात् ) उस पचे हुए रसादि धातुरूप अन्न से ( एताः ) ये ( सप्त ) सात ( अर्चिषः ) देखना आदि विषय के प्रकाशक दीप्ति अर्थात् इन्द्रियरूप शिर के सात द्वार (भवन्ति) अपने २ देखना आदि काम के लिये समर्थ होते हैं ॥

भा०—इस मन्त्र में प्राण अपान समान की स्थिति शरीर में जहां और जैसे होती है सो दिखाते हैं। आंख कान में मुख नासिका द्वारा निकलता हुआ जैसे राज महल में राज गद्दी पर राजा बैठता है वैसे ही मुख्य जीवनरूप प्राण आंख कान रूप राज महल में विराजता है। इस से आंख कान मुख्य स्थान हैं। गुदा लिङ्ग भग में विष्ठा, मूत्र, रक्त, वीर्य को निकालता और विषयानन्द का अनुभव कराता हुआ अपान रहता है। इन दोनों के बीच हृदय में खाये हुए अन्न को पचाता हुआ समान ठहरता है। जैसे पर्वत से सात सोता निकलें वैसे हृदयस्थ समान वायु के व्यापार से सात इन्द्रियरूप द्वारा वा सोता ( आंख नाक कानके दो २ और एक मुख का ये सात द्वार हैं ) अपना २ विषय ग्रहण करने वाले निकले हैं ॥५॥

हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनां तासां शतंशतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥

हृदि । हि । एषः । आत्मा । अत्र । एतत् । एकशतम् । नाडीनाम् । तासाम् । शतंशतम् । एकैकस्याम् । द्वासप्ततिः । द्वासप्ततिः । प्रतिशाखानाडीसहस्राणि । भवन्ति । आसु । व्यानः । चरति ॥ ६ ॥

अ०—इदानीं व्यानकृत्यमाचष्टे ( हृदि ) कमलाकारमांसपिण्डपरिच्छिन्ने हृदयावकाशे ( हि ) एव ( एषः ) शरीराभिमानी (आत्मा) लिङ्गमात्ररूपो जीवात्मा शरीररूपस्य रथस्य स्वामी तिष्ठति (अत्र) हृदये ( नाडीनाम् ) मूलभूतानाम् ( एतत् ) ( एकशतम् ) सङ्ख्यानमस्ति ( तासाम् ) मूलनाडीनां मध्ये ( शतंशतम् ) भेदा भवन्ति ( एकैकस्याम् ) देहलीदीपकन्यायेन शाखाप्रतिशाखाभ्यामुभाभ्यामिदं सम्बध्यते ( द्वासप्ततिः द्वासप्ततिः, प्रतिशाखानाडीसहस्राणि ) ( भवन्ति ) ( आसु ) मूलशाखाप्रतिशाखारूपासु सर्वासु नाडीषु (व्यानः) सर्वस्मिन् व्याप्तत्वाद्व्यानः ( चरति ) गच्छति व्याप्नोति ॥

भा०—यथा कश्चिद् राजा नियते स्थाने कुत्रचिद्दुर्गे तिष्ठति तेन नियुक्तो राजकार्याध्य-

क्षः सर्वराज्ये भ्रान्त्वा प्रजा रक्षति तथैव पुण्ड-रीकसदृशे हृदयदुर्गेऽवस्थितो देहराजो लिङ्गरू-पो जीवस्तेन नियुक्तो व्याननामको वायुर्मूल-शाखाप्रतिशाखारूपासु सर्वशरीरगासु नाडीषु विशेषतः सन्धिस्कन्धमर्मप्रदेशान् रक्षन् वि-शेषेण प्राणापानवृत्त्योरुद्भूतवृत्तिर्वीर्यवत्कर्म-कर्त्ता व्यानो विचरति। अन्यत्राप्युक्तं व्यानः सर्वशरीरग इति। उक्तप्रकारेण सङ्ख्याताः स-र्वा नाड्यो मिलित्वा द्वासप्ततिकोट्यो द्वासप्त-तिलक्षाणि दशसहस्राणि द्वेशते एकाचेति भव-न्ति। अत्रानन्दगिरिणा दशसहस्राणां स्थाने ष-ट्सहस्रं चेत्युक्तम्। तदुक्तप्रकारेण कथमपि नायात्यतो भ्रमसूलकं प्रतिभाति ॥ ६ ॥

भावार्थः—अब व्यान नामक प्राण का व्याख्यान करते हैं (हृदि) कमल के तुल्य आकार वाले [ सुश्रुत के शारीरस्थान में लिखा है कि नीचे मुख वाला कमल के तुल्य हृदय है वह जागते समय खुला रहता और सोते समय कमल के तुल्य बन्द हो जाता है ] मांसपिण्डरूप हृदय में (हि) ही (एषः) यह रथरूप शरीर का स्वामी वा अभिमानी [ कि यह मेरा शरीर है ] (आत्मा) लिंगमात्र रूप वाला जीव रहता है (अत्र) इसी हृदय में (नाडीनाम्, एतत्, एकशतम्) एक सौ एक नाड़ी हैं। यह बात कठोपनिषद् में भी कह चुके हैं (तासाम्) उन एक सौ एक नाड़ियों में से एक २ की (शतंशतम्) सौ २ शाखा नाड़ी फूटती हैं अर्थात् जैसे मूलरूप वृक्ष की जड़ में से स्कन्ध गुद्दे निकलते वैसे मूल एक सौ एक

नाड़ियों में एक २ में सौ २ शाखा निकलती हैं अर्थात् १०१ के साथ १०० का गुणा करने से १०१०० दश हज़ार एक सौ शाखा नाड़ी होती हैं उन शाखा नाड़ियों में से ( एकैकस्याम् ) एक एक के ( द्वासप्ततिर्द्वासप्ततिः, प्रतिशाखानाड़ीसहस्राणि ) (भवन्ति ) बहत्तर २ हजार प्रतिशाखा नाड़ी होती हैं । ( आसु) इन मूल, शाखा और प्रतिशाखारूप सब नाड़ियों में (व्यानः) व्यापक व्याननामी प्राण ( चरति ) विचरता है ॥

भा०--जैसे कोई राजा नियत प्रदेश और किसी उत्तम महल वा किला में रहता है उस से नियत किया राज कार्य का मुख्य अधिकारी सब राज्य में भ्रमण कर प्रजा की रक्षा करता है वैसे ही कमलाकार हृदयरूप किला में स्थित शरीर का राजा जीवात्मा है उस से नियुक्त व्यान नामक वायु मूल शाखा और प्रतिशाखारूप सब शरीर में व्याप्त नाड़ियों में सन्धि, स्कन्ध और मर्मस्थलों की रक्षा करता हुआ विशेष कर प्राण अपान की तरंगों में पराक्रम वाले कर्म करने वाला व्यान विचरता है और सब शरीर में रस रुधिरादि को चला कर फैलाता है । अन्यत्र भी लिखा है कि सब शरीर में रहने वाले वायु का नाम व्यान है। उक्त प्रकार से गिनीगईं मूल शाखा और प्रतिशाखारूप सब नाड़ी मिलकर बहत्तर करोड़ बहत्तर लाख दश हजार दो सौ एक होती हैं। रीति यह है कि प्रथम एकसौ एक १०१ मूल नाड़ी हैं, उन में निकली शाखा १०१०० और इन शाखारूप मूल में निकलीं प्रतिशाखा अर्थात् शाखा की शाखा ७२७२०००००० बहत्तर करोड़ बहत्तर लाख हुईं इन तीनों संख्या का जोड़ ७२७२१०२०१ बहत्तर करोड़ बहत्तर लाख दश हजार दोसौ एक होता है । यहां आनन्दगिरि टीकाकार ने दशहजार के स्थान में छः हजार ही लिखा है सो इस उक्त नियमानुसार भूल प्रतीत होती है अन्य कोई ऐसा नियम नहीं दीखता कि जिस से दश हजार के छः हजार रह जावें॥६॥

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति । पापेन पापमुभाभ्यामेव मनुष्यलोकम्॥७॥

अथ । एकया । ऊर्ध्वः । उदानः । पुण्येन । पुण्यम् । लोकम् । नयति । पापेन । पापम् । उभाभ्याम् । एव । मनुष्यलोकम् ॥ ७ ॥

अ०–(अथ) इदानीमुदानकृत्यमाचष्टे ( उदानः ) कण्ठप्रदेशसंचारी वायुः ( एकया ) एकशतनाड़ीमध्यऊर्ध्वगया सुषुम्णानामिकया नाड्या (ऊर्ध्वः ) सर्वापादतलमस्तकवृत्तिः (पुण्येन ) शास्त्रविहितेन कर्मणा ( पुण्यम् ) सुखभोगसामग्रीसंपन्नम् ( लोकम् ) देवादिस्थानविशेषम् ( नयति ) (पापेन, पापम् ) नरकादियोनिं नयति ( उभाभ्याम् ) शुभाशुभमिश्रिताभ्यां कर्मभ्याम् (मनुष्यलोकम्, एव ) मनुष्ययोनिमेव नयति ॥

भा०–कठवल्लीषूक्तम्–शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका । एतस्यामेव सुषुम्णानाड्यामुदानो विचरति । इयं नाडीमूर्द्धानमारभ्यापादतलमस्मिञ्छरीर आयता । अस्यामेव हृदिस्थायां जीवात्मा तिष्ठति। अनयैव मनो युञ्जानाः समाहिता योगिन आत्मज्ञानं लभन्ते।उदाननामा प्राण एव लिङ्गशरीरेण सार्द्धं जीवात्मानं शरीरान्निस्सारयति कर्मानुकूलौ योनिभोगौ च प्रापयति ॥ ७ ॥

भावार्थः—(अथ) अब उदान वायु का कृत्य कहते हैं (उदानः) कण्ठ में विचरने वाला उदान नामक प्राण (एकया) १०१ एक सौ एक जो नाड़ी कही हैं उन में जो ऊपर को जाने वाली एक सुषुम्णा नामक नाड़ी है उन के साथ (ऊर्ध्वः) नाभि से ऊपर को उठता हुआ उदान (पुण्येन) शास्त्रोक्त पुण्य कर्म से जीवात्मा को (पुण्यम्) सुख भोग की उत्तम सामग्री से युक्त (लोकम्) दर्शनीय स्थान और देवादि उत्तम योनि को (नयति) प्राप्त करता और (पापेन) पाप कर्म के सञ्चित होने से (पापम्) दुःख की सामग्री और तिर्यगादि वा नरकादि योनि को प्राप्त करता तथा (उभाभ्याम्) पुण्य पाप दोनों के सम होने से (मनुष्यलोकम् एव) मनुष्ययोनि को ही प्राप्त करता है ॥

भा०—कठवल्ली में कहा है कि—हृदय में १०१ नाड़ी हैं, उन में एक नाड़ी सीधी मस्तक मूर्द्धा को चली गयी है इसी सुषुम्णा नाड़ी में उदान वायु विचरता है। यह नाड़ी मस्तक से ले कर पग के तलवा तक सीधी विस्तृत है इसी नाड़ी के हृदयस्थ एक प्रदेश में जीवात्मा रहता है। इसी नाड़ी के साथ मन को युक्त करते हुए समाधिनिष्ठ योगिजन आत्मज्ञान को प्राप्त होते हैं। उदान नामक प्राण ही लिङ्ग शरीर के सहित जीवात्मा को शरीर से निकालता है तथा कर्मों के अनुसार योनि और भोग को प्राप्त कराता है ॥ ७ ॥

आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥

आदित्यः । ह । वै । बाह्यः । प्राणः । उदयति । एषः । हि । एनम् । चाक्षुषम् । प्राणम् । अनुगृह्णानः । पृथिव्याम् । या ।

देवता । सा । एषा । पुरुषस्य । अपानम् । अवष्टभ्य । अन्तरा । यत् । आकाशः । सः । समानः । वायुः । व्यानः ॥ ८ ॥

अ०—( आदित्यः, ह ) ( बाह्यः, प्राणः ) अधिदैवपक्षे शरीराद्बहिर्वर्त्तमानः प्राणस्यापि प्राणः ( एषः ) सूर्यः ( चाक्षुषम् ) चक्षुषि स्थितम् ( प्राणम्, अनुगृह्णानः ) सूर्यप्रकाशसाहाय्यमुपलभ्यैव—चक्षुःस्था प्राणशक्तिर्द्रष्टुं समर्था भवति । अयं सूर्यो द्युस्थाना देवता ( या ) ( पृथिव्याम् ) पृथिव्यभिमानिनी ( देवता ) पृथिवीनामरूपा ( सा, एषा ) ( पुरुषस्य ) सात्मकदेहस्य ( अपानम् ) ( अवष्टभ्य ) आलम्ब्याकृष्य शरीरस्थितिहेतुर्जायते तेन गुरुत्वाच्छरीरं न पतति न चावकाशउद्गच्छति । द्यावापृथिव्योः ( अन्तरा ) मध्ये (यत्) यः (आकाशः) आकाशः प्राणापानयोर्मध्ये हृदयमिवास्ति (सः, समानः ) सामान्येनाकाशस्थः समान आकाश इत्युच्यते । आकाश एव समानस्य मुख्यः सहायः । ( व्यानः, वायुः ) सर्वत्र सामान्येन वस्तुष्ववकाशे च व्याप्तो वायुर्व्यानस्य नाडीषु सम्बद्धस्य सहायकोऽस्ति ॥

भा०—इतः पूर्वं प्राणादीनामाभ्यन्तरत्वमुक्तम् । ते आभ्यन्तरस्थाःप्राणादयो बाह्याधिदैविकप्राणसहायकमन्तरेण स्वकार्यं चालयितु-

मशक्ताः । चाक्षुषप्राणस्य सूर्येण मुख्यः सम्ब-न्धस्तैजसत्वादुभयोः। अतएव शरीरस्योर्ध्वभागे चक्षुषी निर्मिते परमात्मना । सूर्योदयादेव च-क्षुषोः शक्तिर्वर्द्धते । अपानस्याधोमुखा प्रवृत्तिः पृथिव्यभिमानिनीदेवता सम्बन्धादस्ति जाठ-रोऽग्निरपि पार्थिव एव तस्य समत्वेऽपानस्य सा-म्यमन्यथा वैषम्यमतएवापानजन्या रोगा व-र्द्धन्ते । अन्तरिक्षस्थो वायुः समानस्य सहायः । सृष्टौ व्याप्तश्च व्यानस्येति ॥ ८ ॥

भाषार्थः—( आदित्यः, ह ) प्रसिद्ध सूर्य ही (बाह्यः,प्राणः) आधिदैविक बाहरी प्राण है अर्थात् इस प्राण का भी प्राण ( एषः) यह सूर्य ( चाक्षुषम् ) आंख में स्थित ( प्राणम् ) प्राण को ( अनुगृह्णानः ) अनुग्रह पूर्वक सहायता करता है अर्थात् सूर्य के प्रकाश की सहायता पाकर के ही नेत्रमें रहने वाली प्राण की शक्ति वस्तु को देख सकती है। यह सूर्य स्वर्गलोक सम्बन्धी दे-वता है और (या) जो (पृथिव्याम्) पृथिवी में पृथिवी की अभि-मानिनी ( देवता ) देवता है ( सा, एषा ) वह यह (पुरुषस्य) आत्मसहित चेतन शरीर के ( अपानम् ) अपान नामी प्राण को ( अवष्टभ्य ) खींचकर शरीर को स्थित रखती है अर्थात् अपान का आकर्षण पृथिवी की ओर नीचे को किये रहती है इसी कारण शरीर भारी होने पर भी इधर उधर को नहीं गिर सकता और न ऊपर को चढ़ सकता है। स्वर्लोक और पृथिवी के ( अन्तरा ) बीच ( यत् ) जो ( आकाशः ) अवकाश प्राण अपान के बीच हृदयाकाश के तुल्य है ( सः, समानः ) वह समान वायु का सहायक और ( व्यानः ) ( वायुः ) सब वस्तु और अवकाश में व्याप्त व्यान वायु नाड़ियों में स्थित व्यान का सहायक है ॥

भा०—इस मंत्र से पूर्व शरीर के भीतर प्राणादिका कृत्य कहा है। वे शरीर में रहने वाले प्राणादि बाहिरी आधिदैविक सूर्यात्मक प्राण की सहायता के बिना अपना कार्य नहीं चला सकते। नेत्र सम्बन्धी प्राण के साथ सूर्य का मुख्य सम्बन्ध है क्योंकि दोनों तैजस हैं। इसी कारण परमेश्वर ने शरीर के ऊपरले भाग में नेत्रों को बनाया है और इसी सम्बन्ध से सूर्योदय होने पर नेत्रों की शक्ति बढ़ती है। पृथिव्यभिमानिनी देवता के आकर्षण से अपान की चाल नीचे को है, जाठराग्नि भी पार्थिव ही है उस के ठीक रहने से अपान वायु की समता और अन्यथा होने से विषमता हो जाती है इसी से अपान वायु के बिगड़ने वा कुपित होने से बहु २ रोग हो जाते हैं। अन्तरिक्ष में रहने वाला वायु समान नामक प्राण का सहायक और सब सृष्टि में व्याप्त वायु व्यान नामक प्राण का सहायक है॥ ८॥

तेजो ह वै उदानस्तस्मादुपशान्ततेजाः।
पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः॥ ९॥

तेजः। ह। वै। उदानः। तस्मात्। उपशान्ततेजाः। पुनर्भवम्। इन्द्रियैः। मनसि। सम्पद्यमानैः॥ ९॥

अ०—सामान्येन यत्सर्वव्यापि (तेजः) (ह, वै) प्रसिद्धम् (उदानः) तदुदानस्यानुग्राहकम्। यत उत्क्रान्तिं जीवात्मनः करोति तस्मादुदान इत्युच्यते (तस्मात्) तेजसः शान्तत्वात् (उपशान्ततेजाः) उपशान्तं स्वाभाविकं तेजोऽस्य स पुरुषो गतासुः सन् म्रियते (मनसि) (सम्पद्यमानैः) निविशमानैः (इन्द्रियैः) चक्षुरादिभिः सह (पुनर्भवम्) जन्मान्तरे पुनरुत्पद्यमानं शरीरान्तरं प्राप्नोति॥

भा०—उदानस्य मुख्यं सहायकं सर्वव्यापि तेजस्तेन तेजसानुगृहीत उदानः कण्ठदेशस्थो देहिनं जीवयति । रोगादिकारणैस्स्वाभाविके तेजसि हते सहायमन्तरेण स्थातुमशक्त उदानस्तं जीवात्मानं शरीरान्निस्सारयति ॥ ९ ॥

भावार्थः—सामान्य कर जो सर्वव्यापी ( तेजः, ह, वै ) प्रसिद्ध तेज है ( उदानः ) वह उदान नामक प्राण का सहायक है। जिस कारण जीवात्मा को शरीर से निकालता इस लिये इस का नाम उदान है ( तस्मात् ) तिस से ( उपशान्त तेजाः ) स्वाभाविक तेज जिस का शान्त हो गया वह पुरुष मरजाता है अर्थात् ( मनसि ) मानस शक्ति में ( सम्पद्यमानैः ) प्रवेश किये ( इन्द्रियैः ) नेत्र आदि इन्द्रियों के साथ ( पुनर्भवम् ) जन्मान्तर होने वाले शरीरान्तर को प्राप्त होता है ॥

भा०—उदान नामी प्राण का मुख्य सहायक सर्वव्यापी तेज है उस तेज की सहायता से कण्ठ देश में स्थित उदान प्राणियों को जीवित रखता है। रोगादि कारणों से जब स्वाभाविक शरीर का तेज नष्ट होता-तब सहायक के विना ठहरने में अशक्त उदान उस जीवात्मा को साथ लेकर शरीर से निकलता है ॥ ९ ॥

यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः ।
सहात्मना यथासङ्कल्पितं लोकं नयति ॥ १० ॥

यच्चित्तः । तेन । एषः । प्राणम् । आयाति । प्राणः । तेजसा । युक्तः । सह । आत्मना । यथासङ्कल्पितम् । लोकम् । नयति ॥ १० ॥

अ०—शरीरान्निष्क्रमणावसरे जीवः ( यच्चित्तः ) यस्मिन्नभ्यस्तेऽनुभूते भोग्यादिवस्तुनि

वासनारज्जुराकृष्टं चित्तमस्य सः (एषः) प्राणी (तेन) कर्मानुकूलवासनाबद्धचित्तेन साकं शरीरेन्द्रियसम्बन्धं विहाय (प्राणम्) मुख्यां प्राणवृत्तिम् (आयाति) आश्रयति (प्राणः) मुख्यः प्राणः (तेजसा) उदानवृत्त्या (युक्तः) सन् (आत्मना) भोक्त्रा स्वामिना जीवात्मना (सह) वर्त्तमानं लिङ्गशरीरम् (यथासङ्कल्पितम्) शुभाशुभकर्मवशाद्यथाभिप्रेतम् (लोकम्) योनिं भोगं च (नयति) प्रापयति॥

भा०—सति शरीरे मनुष्यो यादृशानि शुभान्यशुभानि वा कर्माणि प्रायशः करोति भगवत्स्मरणं वा सदा सर्वापत्सु करोति दीर्घकालनैरन्तर्यसत्कारासेवितो भगवत्प्रणिधानादिरूपस्तादृशएव दृढःसंस्तस्यप्रबलः संस्कारोऽन्तःकरणे जायते ते संस्कारा वासनारूपेण सञ्चीयन्ते तदेव सञ्चितं पुण्यं पापं वा निगद्यते। प्रयाणकाले तादृशमेव तस्य चित्तं भवति। मरणावासरे जीवात्मनः शरीरेन्द्रियैः पूर्वं सम्बन्धे त्रुट्यति स मुख्यं प्राणमालम्बते तदा न वदति न शृणोति वा किन्तु यावत्प्राणएव चलति तावत्सम्बन्धिनो वदन्ति जीवत्ययमिति। अनन्तरमुदानेन युक्तो मुख्यः प्राणः सलिङ्गशरीरं जीवात्मानं देहान्निस्सार्य कर्मानुकूलं स्थानं योनिं भोगं च प्रापयति॥ १०॥

भावार्थः—शरीर से निकलते समय (यच्चित्तः) जिस अ-नुभव वा अभ्यास किये भोग्य आदि वस्तु में लगा वासना-रूप रस्सी से खिंचा जिस का चित्त है वह (एषः) यह प्राणी जीव (तेन) उस कर्मानुकूल वासनाओं से वन्धे चित्त के साथ शरीर और इन्द्रियों से सम्बन्ध छोड़ के (प्राणम्) मुख्य प्राण वृत्ति का (आयाति) आश्रय लेता है और (प्राणः) मुख्य प्राण (तेजसा) उदानवृत्ति के साथ (युक्तः) युक्त हुआ (आत्मना) भोक्ता स्वामी जीवात्मा के (सह) सहित वर्त्तमान लिंग शरीर को (यथासङ्कल्पितम्) शुभ अशुभ कर्म के अनुकूल (लोकम्) योनि वा भोग को (नयति) प्राप्त कराता है ॥

भा०—शरीर की वर्त्तमान दशा में मनुष्य जैसे शुभ वा अ-शुभ कर्म प्रायः करता है अथवा सदा सब आपत् कालों में भगवान् का स्मरण करता रहता है। बहुत काल तक श्रद्धा पूर्वक निरन्तर किया भगवान् का ध्यानादि वैसा ही दृढ़ उस के अन्तःकरण में प्रबल संस्कार होता है, वह संस्कार वासना रूप से सञ्चित होता वही सञ्चित पाप वा पुण्य कहा जाता है उन्हीं वासनाओं के अनुकूल मरते समय उस का चित्त होता है। मरते समय जीवात्मा का इन्द्रियों के साथ पहिले सम्बन्ध टूटता और वह केवल मुख्य प्राण के आश्रय रह जाता है तब न कुछ बोलता न सुनता वा न देखता है किन्तु जब तक श्वासमात्र चलता है तब तक सम्बन्धी लोग कहते हैं मानते कि यह जीता है। पश्चात् उदान से युक्त मुख्य प्राण लिङ्गशरीर के सहित जीव को शरीर से निकाल के कर्मानुकूल लोक में योनि और भोग को प्राप्त कराता है ॥ १० ॥

य एवं विद्वान् प्राणं वेद। न हास्य प्रजा-हीयतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥

यः । एवम् । विद्वान् । प्राणम् । वेद । न । ह । अस्य । प्रजा । हीयते । अमृतः । भवति । तत् । एषः । श्लोकः ॥ ११ ॥

अ०—( यः ) ( विद्वान् ) सदसद्विवेकी पुरुषः ( एवम् ) उक्तप्रकारेण ( प्राणम् ) मुख्यम् ( वेद ) जानाति ( अस्य, ह ) प्रसिद्धस्य विदुषो दिवामैथुनादिशास्त्रविरुद्धदुष्कर्मत्यागात्तदनुकूलमाचरतः ( प्रजा ) पुत्रादिरूपा ( न, हीयते ) वंशाच्छेदो न भवति । किन्तु पुत्रो भवति दृष्टमैहिकं फलमेतत्, मृते च शरीरे ( अमृतः ) अमरणधर्मा मुक्तः ( भवति ) पारलौकिकं फलमेतत ( तत, एषः, श्लोकः ) तस्यार्थस्य प्रतिपादकः प्रमाणीभूत एष वक्ष्यमाणो मन्त्रोऽस्ति॥

भा०—यः पुरुषो मुख्यं प्राणं तत्त्वतो जानाति स जीवन्नैहिकसुखं पुत्रादिजन्यमनुभूय मृत्वा प्राणायामादिलक्षणयोगाभ्यासेनात्मज्ञानसम्पन्नः सन्मुक्तो भवति तदर्थं प्राणविद्यां सम्यग्बुद्ध्वा तदनुकूलमाचरितव्यम् ॥ ११ ॥

भाषार्थः—( यः, विद्वान् ) जो सत्यासत्य का विवेकी विद्वान् पुरुष ( एवम् ) इस उक्त प्रकार से ( प्राणम् ) मुख्य प्राण को ( वेद ) जानता है ( अस्य,ह ) दिन में मैथुन करना आदि शास्त्र विरुद्ध दुष्कर्म के त्याग पूर्वक शास्त्र के अनुकूल आचरण करते हुए इस प्रसिद्ध विद्वान् की ( प्रजा ) पुत्रादि सन्तति ( न, हीयते ) नष्ट नहीं होती अर्थात् वह निर्वंशी नहीं होता किन्तु पुत्रवान् होता है, यह इस जन्म

में प्रत्यक्ष फल है और शरीर छूटने पर ( अमृतः ) जन्ममरण रहित मुक्त ( भवति ) होता है यह परलोक संबन्धी फल है ( तत्, एषः, श्लोकः ) इसी अर्थ का प्रतिपादक प्रमाण रूप यह वक्ष्यमाण मन्त्र है ॥

भा०-जो पुरुष मुख्य प्राण को लक्ष्य से जानता है वह जीता हुआ पुत्रादि से होने वाले संसारी सुख का अनुभव कर प्राणायामादि रूप योगाभ्यास करके आत्मज्ञानी हुआ मरने पश्चात् मुक्त होता है इसलिये ज्ञानी को उचित है कि प्राण विद्या को ठीक २ जान उस के अनुकूल आचरण करे ॥

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा। अध्यात्मञ्चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥

उत्पत्तिम् । आयतिम् । स्थानम् । विभुत्वम् । च । एव । पञ्चधा । अध्यात्मम् । च । एव । प्राणस्य । विज्ञाय । अमृतम् । अश्नुते । विज्ञाय । अमृतम् । अश्नुते । इति ॥ १२ ॥

अ०-( उत्पत्तिम् ) परमात्मनः सकाशात् ( आयतिम् ) वासनारज्जुभिराकृष्यमाणस्य शरीरेऽस्मिन्नागमनम् ( स्थानम् ) पायूपस्थादिस्थानेषु भेदेन स्थितिम् ( विभुत्वम्, च ) भोक्तृशक्तितैजसप्रधानतया सर्वव्यापित्वं सम्राडिव स्वाम्यं च ( एव ) ( पञ्चधा ) प्राणवृत्तिभेदानां प्रकारेणैव ( प्राणस्य ) सूर्यादिरूपेण बाह्यं चक्षुरादिरूपेण ( च, एव ) (अध्यात्मम्) शरीरान्तर्गतमवस्थानं प्राणस्वरूपम् ( विज्ञाय )

अमरणधर्मत्वं मोक्षभावम् (अश्नुते ) प्राप्नोति द्विर्वचनं तृतीयप्रश्नस्य समाप्तिसूचकम् ॥

भा०—यथा प्रश्नत्रयेण प्राणस्य महिमा वर्णितस्तथैव सम्यग्विज्ञाय तदनुकूलमाचरन् योगो जनो मुक्तो भवति ॥१२॥

भाषार्थः—( उत्पत्तिम् ) परमात्मा से प्राण की उत्पत्ति ( आयतिम् ) वासना रूप रस्सियों से खींचे हुए प्राण का इस शरीर में आना (स्थानम् ) गुदा नेत्र आदि स्थानों में भिन्न २ प्रकार से स्थिति ( च ) और ( विभुत्वम्, ) भोक्तृ शक्ति के तैजसप्रधान होने से सर्वत्र व्याप्त होना और राजा के तुल्य सब इन्द्रियादि का अधिष्ठाता होना ( पञ्चधा, एव ) प्राण अपानादि पांच प्रकारों से ( प्राणस्य ) सूर्यादि रूप से बाह्य ( च ) और चक्षु आदि रूप से ( अध्यात्मम् ) शरीरान्तर्गत प्राण के स्वरूप को ( एव ) ही ( विज्ञाय ) ज्ञानी जानकर ( अमृतम् ) अविनाशी मोक्ष दशा को ( अश्नुते) प्राप्त होता है । इस में अन्तिम वाक्य का द्वितीय वार पाठ तृतीय प्रश्न की समाप्ति जताने के लिये है ॥

भा०—उक्त तीन प्रश्नों में जैसी प्राण की महिमा कही गई है उसी प्रकार ठीक २ प्राण को जान के उस के अनुकूल आचरण करता हुआ योगी जन मुक्त होता है ॥ १२ ॥

इति तृतीयः प्रश्नः समाप्तः ॥

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति, कान्यस्मिन् जाग्रति, कतर एष देवः स्वप्नान् पश्यति, कस्यैतत्सुखं भवति, कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥

अथ । ह । एनम् । सौर्यायणी । गार्ग्यः । पप्रच्छ । भगवन् । एतस्मिन् । पुरुषे । कानि । स्वपन्ति । कानि । अस्मिन् । जाग्रति । कतरः । एषः । देवः । स्वप्नान् । पश्यति । कस्य । एतत् । सुखम् । भवति । कस्मिन् । नु । सर्वे । सम्प्रतिष्ठिताः । भवन्ति । इति ॥ १ ॥

अ०—( अथ ) कौसल्यकृतप्रश्नस्योत्तरश्रवणानन्तरं क्रमेण प्रत्यगात्मविषयेषु मनोवागतीतमविषयमविकृतं पराविद्यागम्यं पुरुषाख्यमजं शिवं शान्तं सत्तामात्रलक्षणमक्षरं नित्यमात्मानं ज्ञातुम् ( सौर्यायणी ) सौर्यस्य युवापत्यम्। फिञन्तस्यान्येषामपि दृश्यत इति दीर्घः ( गार्ग्यः ) गर्गगोत्री ( एनम् ) पिप्पलादम् ( पप्रच्छ ) पृष्टवान् हे ( भगवन् ! ) ( एतस्मिन् ) ( पुरुषे ) सात्मके शरीरे प्राणेन्द्रियेषु ( कानि ) करणानि ( स्वपन्ति ) स्वव्यापारादुपरमन्ते ( अस्मिन् ) शरीरे ( कानि ) (जाग्रति ) अनिद्रावस्थाव्यापारं कुर्वते बहूनां प्राणादीनां मध्ये ( कतरः ) कः ( एषः ) इच्छादिगुणवान् (देवः) क्रीडासक्तः (स्वप्नान्) जाग्रद्दर्शनाद्व्यावृत्तस्य तद्वदन्तःशरीरे दर्शनानि स्वप्नास्तान् (पश्यति) ( कस्य ) ( एतत् ) प्रत्यक्षमनुभूयमानम् ( सुखम् ) जाग्रत्स्वप्नव्यापारोपरमेऽनायासलिङ्गमनाबाधं सुखं कस्य ( भवति )

( कस्मिन्, उ ) कस्मिंश्च प्रलीनः कार्यकारणसंघातो यस्मिन् स कः स्यात् ? ( सर्वे ) दृश्या वागादयः ( सम्प्रतिष्ठिताः ) सुषुप्तिलयकालयोः केनाबाधरूपेणावतिष्ठन्ते सम्यक्प्रतिष्ठिताः (भवन्ति ) ( इति ) एवं पप्रच्छ ॥

भा०—अत्र पञ्च प्रश्नाः सन्ति तत्रादिमप्रश्ने जागरितस्य धर्मो पृष्टः स्वप्ने यस्य व्यापारो परमे जागरणाभावएतज्जागरणं तस्य धर्म इति निश्चेतुम् । अनुपरतव्यापारस्य जाग्रतः शरीररक्षणं कस्य धर्म इति द्वितीयप्रश्नाशयः । स्वप्नस्य को धर्मीति तृतीयाशयः । सुखमहमस्वाप्समित्यादिसुखानुभवधर्मी कइति चतुर्थप्रश्नाशयः । पञ्चमे जाग्रदाद्यवस्थात्रयातीतं तुरीयमनिर्बाधमक्षरं किमित्याशयः प्रष्टुरत्रसेयः । तेषां क्रमेणोत्तराणि वक्ष्यन्ते ॥ १ ॥

भाषार्थः—( अथ ) अथ कौशल्य ऋषिकृत प्रश्न का उत्तर सुनने पश्चात् क्रम से सूक्ष्म २ विषयों में जो मन तथा वाणी का विषय नहीं, पराविद्या से ज्ञेय अविकारी, सत्तामात्ररूप अज अविनाशी शिवशान्तस्वरूप पुरुष नामक अतिसूक्ष्म नित्य आत्मा को जानने के लिये (सौर्यायणी) सूर्य के पौत्र (गार्ग्यः) गर्ग गोत्री ने ( एनम् ) इन पिप्पलाद जी से ( पप्रच्छ ) पूछा कि हे ( भगवन् ! ) गुरो ( एतस्मिन् ) इस ( पुरुषे ) आत्मक शरीर में प्राण और इन्द्रियों में से (कानि) कौन करण ( स्वपन्ति ) सोते नाम अपना काम छोड़ देते तथा ( कस्मिन् )

इस शरीर में ( कानि ) कौन (जाग्रति) जागते अर्थात् निद्रा से विरुद्ध चेष्टा करते हैं और बहुत मार्गादि के बीच (कतरः) कौनसा ( एषः ) यह इच्छादि गुणवाला ( देवः ) क्रीडा में लगा देव ( स्वप्नान्) जागने संबन्धी देखने आदि को छोड़ के जागने के तुल्य शरीर के भीतर देखना स्वप्न कहाता उन स्वप्नों को ( पश्यति ) देखता ( एतत् ) प्रत्यक्ष अनुभव में आने वाला ज्ञानसम्बन्धी ( सुखम् ) जाग्रत् स्वप्न दोनों की चेष्टा के शान्त होने पर स्वाभाविक प्रवृत्ति से सहज सुख (क-स्य ) किस को ( भवति ) होता है ( उ ) ( कस्मिन् ) किस में ( सर्वे ) प्रतीत होने वाले वाणी आदि ( सम्प्रतिष्ठिताः ) सम्यक् प्रतिष्ठित ( भवन्ति ) होते हैं अर्थात् यह कार्य कारण का समुदाय स्थूल सूक्ष्म देह किस में लीन हो जाता है वह कौन है ? । अथवा सुषुप्ति और प्रलय के समय ये सब दृश्य किस अबाधरूप से अवस्थित होते हैं (इति) इस प्रकार पूछा ॥

भा०—इस चौथे प्रश्न में अवान्तर पांच प्रश्न हैं । सोने के समय जिस की चेष्टा रुकजाने पर जागने का अभाव होजाता वह जागना धर्मी का धर्म है सो वह धर्मी कौन है ऐसा नि-श्चय करने के लिये पहिला प्रश्न है । देखते सुनते जागते हुए शरीर रक्षा करना किस का काम है यह दूसरे प्रश्न का अभि-प्राय है । सोने वाला कौन है यह तीसरे प्रश्न का तात्पर्य है । मैं सुख से सोया इत्यादि सुख का अनुभव करने वाला कौन है यह चौथे प्रश्न का आशय जानो । पांचवें प्रश्न में पूछने वाले ऋषि का अभिप्राय यह है कि जाग्रत् स्वप्न सुषुप्ति इन तीनों से पृथक् अबाध अविनाशी चौथी अवस्थारूप शान्त शिव कौन है ? । इन का क्रम से उत्तर कहेंगे ॥ १ ॥

तस्मै स होवाच । यथा गार्ग्य ! मरीचयो-ऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकी भवन्ति । ताः पुनः पुनरुदयतः प्रचरन्त्येवं

ह वै तत्सर्वं परे देवे मनस्येकी भवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥

तस्मै । सः । ह । उवाच । यथा । गार्ग्य ! । मरीचयः । अर्कस्य । अस्तम् । गच्छतः । सर्वाः । एतस्मिन् । तेजःमण्डले । एकीभवन्ति । ताः । पुनःपुनः । उदयतः । प्रचरन्ति । एवम् । हवै । तत् । सर्वम् । परे । देवे । मनसि । एकीभवति । तेन । तर्हि । एषः । पुरुषः । न । शृणोति । न । पश्यति । न जिघ्रति । न । रसयते । न । स्पृशते । न । अभिवदते । न आनन्दयते । न विसृजते । न । इयायते । स्वपिति । इति । आचक्षते ॥ २ ॥

अ०—कानि स्वपन्तीत्यस्योत्तरं दीयते (तस्मै) गार्ग्याय ( सः ) पिप्पलादः ( ह, उवाच ) इदमब्रवीत् । हे ( गार्ग्य ! ) यथा ( अस्तम्, गच्छतः ) ( अर्कस्य ) सूर्यस्य ( सर्वाः, मरीचयः) ( किरणाः ( एतस्मिन्, तेजोमण्डले तेजोराशौ ( एकी, भवन्ति ) कूर्माङ्गानीवोपसंहृता भवन्ति ( ताः ) रश्मयः पुनः पुनः प्रत्यहम् ( उदयतः) सूर्यस्य सहैव ( प्रचरन्ति ) ( एवम्, हवै ) (तत्सर्वम् ) चक्षुरादीन्द्रियमात्रम् ( परे ) इन्द्रियेभ्यः सूक्ष्मे ( देवे ) द्योतनवति विषयप्रकाशके ( मनसि ) ( एकीभवन्ति ) निद्राहेतुना तमोगुणेनाभिभूते स्वरूपावस्थिते मनसि सर्वा

इन्द्रियशक्त्यौ लीना भवन्ति (तेन) हेतुना (तर्हि) तस्मिन्काले (एषः, पुरुषः) मनुष्यः (न, शृणोति, न, पश्यति, न, जिघ्राति, न, रसयते, न, स्पृशते, नाभिवदते) वाचा (नादत्ते) हस्ताभ्याम् (नानन्दयते) उपस्थेन (न, विसृजते) गुदेन्द्रियेण विष्ठादिकम् (न, इयायते) पद्भ्यां न गच्छति। एवं सति (स्वपिति) अयं पुरुषः (इति, आचक्षते) कथयन्ति जागृताः॥

भा०—सर्वेन्द्रियेषु मनसः शक्तिरेव प्रधाना। सर्वेन्द्रियाणि मनोऽनुगामीनि मनसि जाग्रति जाग्रति तमोऽभिभूते स्वपति च तस्मिन् स्वपन्ति। सर्वत्रैव सहानुवर्त्तिनः पदार्थाः सहयोगिनि सति भवन्ति। असति च तेषामप्यभावः। यथा सति सूर्ये किरणा भवन्त्यसति तासामप्यभावः। अर्थादिन्द्रियाणि मनसा सार्द्धं स्वपन्ति तेषु स्वपत्सु पुरुषः स्वपितीति कथ्यते जनैः। तत्र निद्रायाः कारणं तमस्तथा चोक्तं सुश्रुतस्य शरीरे—

हृदयं चेतनास्थानमुक्तं सुश्रुत! देहिनाम्।
तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम्॥२॥

भावार्थः—अब कौन सोते हैं इस प्रथम प्रश्न का उत्तर दिया जाता है (तस्मै) उस गर्गगोत्री ऋषि से (सः) वे पिप्पलाद (ह, उवाच) यह बोले कि हे (गार्ग्य) गार्ग्य ऋषि (यथा) जैसे (अस्तम्, गच्छतः) अस्त होते हुए (अ-

केस्य ) सूर्य की ( सर्वाः ) सब (मरीचयः) किरणें ( एतस्मिन्) इस ( तेजोमण्डले ) तेजःस्वरूप सूर्यमण्डल में ( एकीभवन्ति ) लीन होती अर्थात् जैसे कछुआ अपने अवयवों को शरीर में कर लेता वैसे उसी में मिल जाती हैं ( ताः ) वे किरणें ( पुनः पुनः ) फिर २ नित्य प्रातःकाल ( उदयतः ) उदय होते सूर्य के साथ ही ( प्रचरन्ति ) फैलती हैं ( एवम्, इवै ) इसी प्रकार ( तत्सर्वम् ) वे सब नेत्रादि इन्द्रिय ( परे ) अपने से सूक्ष्म ( देवे ) द्योतक नाम विषयों के प्रकाशक ( मनसि ) मन में ( एकीभवन्ति ) लीन हो जाते हैं अर्थात् तमोगुण से दबे अपने स्वरूप में स्थित निद्राग्रस्त मन में सब इन्द्रियों की शक्ति लीन हो जाती हैं ( तेन ) तिसी कारण ( तर्हि ) उस निद्रासमय में ( एषः ) यह ( पुरुषः ) मनुष्य ( न, शृणोति ) न कान से सुनता ( न, पश्यति ) न आंख से देखता ( न, जिघ्रति ) न नाकसे सूंघता ( न, रसयते ) न जीभ से चाखता ( न, स्पृशते ) न त्वचासे शीत उष्ण वा कोमल कठोर जानता (नाभिवदते) न वाणी से बोलता (नादत्ते) न हाथों से पकड़ता ( न, आनन्दयते ( न उपस्थेन्द्रिय से मैथुन करता ( न विसृजते ) न गुदेन्द्रिय से विष्ठा करता और ( न, इयायते ) न पगों से चलता है किन्तु ऐसा होने पर यह ( स्वपिति ) सोता है ( इति ) ऐसा ( आचक्षते ) लोग कहते हैं।

भा०—सब इन्द्रियों में मन की शक्ति ही मुख्य है सब इन्द्रिय मन के पीछे चलते मन के जागने से सब जागते और तमोगुण से घेरे सोते हुए मन के साथ ही सो जाते हैं। सर्वत्र ही सहयोगी पदार्थ सहयोगी के रहने पर होते और न रहने पर नहीं रहते। जैसे सूर्य के उदय होने पर किरण फैलते और सूर्यके अस्त होते ही किरण भी नहीं रहते। अर्थात् इन्द्रिय मन के साथ सोते हैं उन के सोने पर पुरुष सोता है ऐसा कहते हैं। निद्रा का कारण तमोगुण है सुश्रुत में

लिखा है कि चेतनता का स्थान हृदय है वह जब तमोगुण से आच्छादित होता है तब मनुष्य को निद्रा घेर लेती है॥२॥

प्राणाग्नय एवैतस्मिन् पुरे जाग्रति । गार्हपत्यो ह्वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयःप्राणः३

प्राणाग्नयः । एव । एतस्मिन् । पुरे । जाग्रति । गार्हपत्यः। हवै । एषः । अपानः । व्यानः । अन्वाहार्यपचनः । यत् । गार्हपत्यात् । प्रणीयते । प्रणयनात् । आहवनीयः । प्राणः ॥३॥

अ०–कान्यस्मिन् जाग्रतीत्यस्योत्तरमाह (एतस्मिन्) (पुरे) नवद्वारे नगरस्थानीये स्रोत्रादिषु सुप्तेषु (प्राणाग्नयः, एव) रूपप्रकाशका अग्नय इव जीवनप्रकाशकाः प्राणाः (जाग्रति) अत्र गार्हपत्यादिस्रौताग्निभिः प्राणादीनां साम्यं दर्शयति तद्यथा–(गार्हपत्यो हवै) पत्नीसंयाजादिस्रौतकर्मसाधनभूतो गृहपदवाच्यायाः स्त्रियाः पत्या यथाविधि कृताधानः सस्त्रीकेनैव पुरुषेणाधातुमुचितोऽग्निरेव (एषोऽपानः) वायुर्नाभिसंस्थितः शरीरस्थापानवायोः स्रौताग्निषु गार्हपत्यस्य च गृहस्थपुरुषेणैव प्रधानः सम्बन्धइति साम्यम् । (व्यानोऽन्वाहार्यपचनः) हृदयाद्दक्षिणसुषिरद्वारेण निर्गमाद्दक्षिणदिक्सम्बन्धाद्व्यानएवान्वाहार्यपचनो दक्षिणाग्निः (यद्गार्हपत्यात्प्रणीयते) यस्मादग्निहोत्रकाले पौर्णमासादीष्टिकाले च गार्हपत्य-

स्वरात्तत्कर्मार्थमुद्धृत्य प्रणीयतआनीयतेऽतः (प्रणयनात्) उद्धरणात्प्राणआहवनीयः। मुख-नासिकाभ्यां सञ्चरणशीलः प्राणोऽपि नाभिस्था-पानादेव प्रणीयतआनीयतइति प्राणस्याहवनी-येन साम्यम् ॥

भा०—सन्तानोत्पत्त्यादिकार्य्याणि पायूपस्थे-न्द्रियसम्बद्धानि सर्वाण्येव गृहाश्रमेऽपानवायु-साध्यानि सन्ति। गार्हपत्योऽग्निरपि सस्त्रीकपु-रुषेणैव यथाविध्याधीयते नान्येन। व्यानस्य दक्षिणगतिरेव दक्षिणाग्निना साम्यं बोध्यम्। ब्राह्मादिविधिना धर्मपुरस्सरं स्नातकैरूढासु स्त्रीषु जाताश्च ब्रह्मचारिणो भवन्ति। अर्थाद्यथा-गार्हपत्यादाहवनीयः प्रणीयतएवमेव गृहस्थेभ्यो ब्रह्मचारिणआगच्छन्ति तेष्वेव मुखसम्बद्धस्य वेदघोषणादिकार्यसाधकस्य प्राणस्य प्राबल्यं जायते। एवं चाऽत्र गार्हपत्याद्यग्निभिः सह बहु विधमपानादिशरीरस्थवायूनां साम्योपपादनं सम्भवति ॥ ३ ॥

भाषार्थः—इस शरीर में कौन जागते हैं इसका उत्तर कहते हैं (एतस्मिन्, पुरे) इस इन्द्रियरूप नव दरवाजे वाले शरीर रूप नगर में श्रोत्रादि इन्द्रिय प्रजा के सो जाने पर (प्राणा-ग्नयः, एव) रूप विषय के प्रकाश करने वाले अग्नियों के तुल्य जीवन के प्रकाशक प्राण ही (जाग्रति) जागते हैं अर्थात् जैसे रात्रि को सब के सोने पर चौकीदार जागते हैं वैसे इन्द्रि-

यादि रूप प्रजा के सोने पर शरीररूप नगर की रक्षा के लिये प्राणरूप चौकीदार पुकारते हैं कि यह शरीर जीवित है। यहां गार्हपत्यादि श्रौताग्नियों के साथ प्राणादि की समता दिखाते हैं जैसे (गार्हपत्यो हवै) पत्नी संयाजादि श्रौतकर्माङ्गों का साधनभूत, गृहनाम स्त्री से पति ने विधिपूर्वक आधान किया अर्थात् स्त्री सहित पुरुष ही जिस का आधान कर सकता है ऐसा गार्हपत्य अग्नि ही (एषोऽपानः) यह शरीर में रहने वाला नाभिस्थ अपान है। शरीरस्थ अपान वायुका और श्रौत अग्नियों में गार्हपत्य का गृहस्थ के साथ प्रधान सम्बन्ध है यहां गार्हपत्य के साथ अपान की समता है (व्यानोऽन्वाहार्यपचनः) हृदय से दक्षिण की ओर को गई नाड़ी के छिद्र से गमन करने के कारण दक्षिण दिशा के सम्बन्ध से दक्षिणाग्नि के साथ व्यान की समता है (यद्गार्हपत्यात्प्रणीयते) जिस कारण अग्निहोत्र के समय वा पौर्णमासादि इष्टियों के समय गार्हपत्यकुण्ड से होम कर्म के लिये उद्धरण करके लाया जाता है इस (प्रणयनात्) प्रणयन नाम उद्धरण से प्राण को आहवनीय कहते हैं। क्योंकि मुख नासिका द्वारा विचरता हुआ प्राण भी नाभिस्थल में रहने वाले अपान से ही उठकर ऊपर को आता है यही प्राण की आहवनीय से साथ तुल्यता है॥

भ०—गुद और उपस्थ इन्द्रिय से सम्बन्ध रखने वाले सन्तानोत्पत्ति आदि सभी कार्य गृहाश्रम में अपान वायु से सिद्ध होते हैं। गार्हपत्याग्नि का भी स्त्री सहित पुरुष ही विधि पूर्वक आधान करता है अन्य कोई नहीं। व्यान की दक्षिण ओर गति होना ही दक्षिणाग्नि के साथ समता है। ब्राह्मआदि विवाह की उत्तम रीति से धर्म पूर्वक स्नातकपुरुषों ने प्राप्त की सवर्णा स्त्रियों में उत्पन्न संस्कारी अच्छे बालक ही ब्रह्मचारी बनते हैं। अर्थात् जैसे गार्हपत्य से आहव-

मीप लाया जाता है, वैसे ही गृहस्थों से उत्पन्न हुए ब्रह्मचारी बनते उन्हीं में मुख सम्बन्धी वेदघोषणादि कार्यसाधक प्राण की प्रबलता होती है। इस प्रकार यहाँ गार्हपत्यादि अग्नियों के साथ अपानादि शरीरस्थ वायुओं की समता बहुत प्रकार की सिद्ध हो सकती है ॥ ३ ॥

यदुच्छ्वासनिश्वासावाहुती समं नयतीति स समानः। मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥४॥

यत्। उच्छ्वासनिश्वासौ। आहुती। समम्। नयति। इति। सः। समानः। मनः। ह। वाव। यजमानः। इष्टफलम्। एव। उदानः। सः। एनम्। यजमानम्। अहरहः। ब्रह्म। गमयति ॥ ४ ॥

अ०—स्वापकाले समानोदानौ किं कुरुत इत्याह ( यत ) ( उच्छ्वासनिश्वासौ ) ( आहुती ) आहुतिरूपौ ( समम् ) पर्यायेण द्वयोरपि समताम् ( नयति ) प्रापयति ( इति ) अनेनैवार्थेन ( सः ) नाभिस्थः प्राणः ( समानः ) समान इत्युच्यते ( ह,वाव ) अव्ययौ ( मनः ) मन्यते जानाति चित्सत्तया सर्वमिति स्वर्गमोक्षादिकमभीप्सुः ( यजमानः ) यज्ञादेरिव फलाकाङ्क्षाविशिष्टः ( इष्टफलम् ) कृतयज्ञस्येवाभीष्टं फलम् ( उदानः ) इष्टफलस्य निमित्तत्वात् ( सः ) उदानः ( एनम् ) मनोरूपम् ( यजमानम् ) सुषुप्तिकाले ( अहरहः ) प्रतिदिनम्

( ब्रह्म ) स्वर्गमिव ब्रह्मप्राप्तिसुखम् (गमयति) प्रापयति तस्मादेव यज्ञफलस्थानीय उदानः॥

भा०—समानो नाभिस्थः प्राणस्ततएव श्वास उत्तिष्ठति। स एव पुनरुपरिष्टादधस्तादपकर्षति तेनोच्छ्वासनिश्वासौ साम्येन चलतः। यद्येक आधिक्येन चलेदेकश्च शैथिल्येन तदा शरीरस्थितौ सन्देहः स्यात्। एतौ साम्येन प्रवर्त्तयति तस्मादेव तस्य समान इति नामास्ति। शयनयज्ञानुष्ठान उच्छ्वासनिश्वासावाहुती मनो यजमानः, समानो होता, उदानः फलप्रेरकः, सउदान एव सुषुप्तौ समाधौ च यजमानं फलरूपं ब्रह्म प्रापयति ॥ ४ ॥

भाषार्थः—सोते समय समान और उदान क्या करते हैं सो कहा जाता है ( यत् ) जो ( उच्छ्वासनिश्वासौ ) ऊपर को वा नीचे को श्वास चलता है इन दो ( आहुती ) आहुतियों को ( समम् ) बराबर एक दूसरे के पीछे ( नयति ) अग्नि में घी छोड़ के जैसे प्राण को ऊपर चढ़ा के लौटा देना ( इति ) इसी अभिप्राय से ( सः ) वह नाभि में रहने वाला वायु ( समानः ) समान कहाता है ( ह वाव ) और ( मनः ) सब विषय को चेतन सत्ता के सम्बन्ध से जानने वाला (यजमानः) यज्ञादि के फल की इच्छा से युक्त (इष्टफलम्) यज्ञ के फल के तुल्य अभीष्ट फल प्राप्ति का निमित्त होने से उदान फल रूप है ( सः ) वह ( उदानः ) उदान ( एनम् ) इस मनोरूप ( यजमानम् ) यजमान को सुषुप्ति के समय ( अहरहः ) प्रतिदिन ( ब्रह्म ) स्वर्गतुल्य ब्रह्म प्राप्ति सुख को (गमयति) प्राप्त कराता है इसी से यज्ञफल स्थानी उदान है ॥

भा०—नाभि में ठहरने वाला प्राण समान है, उसी से श्वास उठता है यही फिर ऊपर से नीचे श्वास को खेंचता है, इस कारण ऊपर नीचे बराबर श्वास चलाता है। यदि ऊपर को जाकर नीचे न आवे वा नीचे से ऊपर को न जावे वा एक ओर को विरोध करे तो शरीर का ठहरना कठिन हो जावे। इन ऊपर नीचे जाने आने वाले दोनों श्वासों को सोते जागते समय सम रखता है, इस लिये उस को समान कहते हैं। निद्रारूप यज्ञ के अनुष्ठान में ऊपर नीचे को श्वास चलना आहुति, मन यजमान, समान होता और उदान फल दिलाने वाला ऋत्विक् कर्म है। क्योंकि वह उदान ही सुषुप्ति और समाधि में मनरूप यजमान को फलरूप ब्रह्म के निकट पहुंचाता है। इसी ब्रह्मप्राप्ति से सुषुप्ति में अकथनीय आनन्द मिलने से जगा देने में दुःख मानता है ॥ ४ ॥

अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टंदृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥५॥

अत्र। एषः। देवः। स्वप्ने। महिमानम्। अनुभवति। यत्। दृष्टंदृष्टम्। अनुपश्यति। श्रुतंश्रुतम्। एव। अर्थम्। अनुशृणोति। देशदिगन्तरैः। च। प्रत्यनुभूतम्। पुनःपुनः। प्रत्यनुभवति। दृष्टम्। च। अदृष्टम्। च। श्रुतम्। च। अश्रुतम्। च। अनुभूतम्। च। अननुभूतम्। च। सत्। च। असत्। च। सर्वम्। पश्यति। सर्वः। पश्यति ॥ ५ ॥

अ०—कतर एष देवः स्वप्नान् पश्यतीत्यस्य प्रश्नस्योत्तरं विवृणोति (अत्र) पूर्वोक्तेऽस्मिन्

( स्वप्ने ) स्वापकाले प्राणादिषु शरीररक्षार्थं जाग्रत्सु ( एषः ) पूर्वोक्तः ( देवः ) चिच्छक्तियुक्तं चेतनं मनो मनोरूपो मनोऽवच्छिन्नोऽर्कोरश्मीनिव स्वस्मिन् श्रोत्रादीनां संहर्त्ता मनोमयः ( महिमानम् ) विषयिविषयाद्यनेकभावप्राप्तिरूपं महत्त्वम् ( अनुभवति ) वक्ष्यमाणप्रकारेणानुसन्धत्ते ( यत्, दृष्टम्, दृष्टम् ) पुत्रमित्रकलत्रादिप्रियं प्रतिकूलं च यावज्जाग्रदवस्थायां दृष्टं नेत्रेण तद्वासनावासितः पुत्रमित्रादिकं छायारूपं स्वप्ने ( अनुपश्यति ) तदनुकूलं प्रत्यक्षं सत्यमिव पश्यति ( श्रुतम्, श्रुतम्, एव ) ( अर्थम् ) इष्टानिष्टोदासीनभावप्रतिपादकं शब्दविषयम् ( अनुशृणोति ) कर्णाभ्यामिव जाग्रद् दशायामिव प्रत्यक्षं शृणोति (च) (देशदिगन्तरैः) देशान्तरैर्नदीतीरवाटिकारामारण्यग्रामपत्तनादिभिर्दिगन्तरैः प्राच्यादिभिः ( प्रत्यनुभूतम् ) प्रत्येकवारकृतानुभवविषयं तादृशमेव (पुनःपुनः) अनेकदिनेषु ( प्रत्यनुभवति ) अनेकस्वप्नेषु वारंवारमनुभवत्यनुसन्धत्त इदमित्थमिति। अर्थात् (दृष्टम्, च, श्रुतं, च, अनुभूतं, च, सत् च) इह वर्त्तमाने जन्मनि दृष्टं श्रुतमनुभूतं विद्यमानं च (अदृष्टं, च, अश्रुतं, च, अननुभूतं, च, असत्, च,) अविद्यमानं च जन्मान्तरीयमेतत्

( सर्वम् ) उभयविधम् ( पश्यति ) जाग्रत्काले विद्यमानमिवासत्पश्यति (सर्वः, पश्यति) सर्वः प्राणी गर्भस्थितिमारभ्य कीटपतङ्गादिपर्यन्तः स्वप्नान् पश्यति जानाति ॥

भा०—यावद्दृष्टं श्रुतमनुभूतमन्येन्द्रियेण तत्सर्वं सर्वः प्राणी स्वप्नेऽसदपि सदिवाविद्यया पश्यति शृणोति, अनुभवति च स्वप्नद्रष्टा मनोमय उपाधिमान् चेतनः । गर्भाशये चतुर्थमासादारभ्य बालो जन्मान्तरानुभूतमेव स्वप्नं पश्यति । उत्पन्नोऽपि पञ्चवर्षावधि प्रायो जन्मान्तरीयमेव स्वप्नमनुभवति । पश्चात् प्रायो दृष्टजन्मानुभूतमेव स्वप्नं पश्यति । यद्यपि जन्मान्तरेष्विन्द्रियैरेव विषया अनुभूयन्ते ततस्तेषामदृष्टत्वादिकमनुपपन्नं स्यादिति तन्न यैरिन्द्रियगोलकैस्तेऽनुभूतास्ते जन्मान्तरीयशरीरेण साकमेव नष्टाः स्वप्नाश्चेदानीं केवलेन मनसानुभूयन्ते मनश्च जन्मान्तरीयमेव तिष्ठति । वर्त्तमानेन्द्रियैश्च नानुभूतमिति तेषामदृष्टत्वादिकमुपपन्नम् । अस्मिन्मन्त्रे=एषेतिपदेन पूर्वं परामृष्टं मनएव ग्राह्यम् । यद्यपि विषयानुभवकाले मनसः करणत्वं मन्यन्ते विज्ञास्तथापि विषयानुभवे मनोरूपस्योपाधेरेव प्राबल्यं प्राधान्यं च प्रदर्शयितुं मनसएव स्वप्नद्रष्टृत्वं

सौकर्यातिशयविवक्षायां कर्मकर्तृवदभीष्टम् । तत्र विरुद्धरूपस्य क्षेत्रज्ञस्य स्वभावतोऽमलत्व-शुद्धत्वाऽबद्धत्वनित्यमुक्तत्वादिप्रदर्शनं श्रुतेर्ल-क्ष्यार्थः । यथा जपापुष्पाद्युपहितो रक्तइव दृश्य-मानोऽपि स्फटिकः स्वरूपेण शुद्धएव तथैव शरी-रेन्द्रियमनःसंयोगेन तत्तद्रूपो दृश्यमानोऽपि क्षेत्रज्ञः स्वभावतः शुद्धोऽन्यथा मोक्षासम्भवः स्यात् ॥

भावार्थः—कौन देव स्वप्नों को देखता है इस पूर्व कहे प्रश्न का उत्तर दिया जाता है ( अत्र ) इस पूर्वोक्त ( स्वप्ने ) स्वप्नकाल में शरीर रक्षा के लिये प्राणादि के जागते (एषः, देवः ) यह पूर्वोक्त चेतनशक्ति से युक्त होने के कारण चेतन मन अर्थात् मनोऽवच्छिन्न मनोरूप चेतनात्मा ही मनःपद-वाच्य है । जैसे अस्त होते समय सूर्यदेव सब किरणों को अ-पने में लय कर लेते हैं वैसे यह मनोदेव भी सोते समय सब श्रोत्रादि इन्द्रियों को अपने स्वरूप में समेट कर उन्हीं सूक्ष्म इन्द्रिय शक्तियों से सोते समय स्वप्न देखता है ( महिमानम् ) विषयी इन्द्रिय और विषय आदि अनेक भावों की प्राप्तिरूप महत्त्व का ( अनुभवति ) अनुभव करता है अर्थात् आगे कहे प्रकार से अनुसन्धान करता है ( यत्, दृष्टं दृष्टम् ) पुत्र मित्र स्त्री आदि प्रिय वा भिन्न २ प्रतिकूलों को जागते समय नेत्र से देखा है अर्थात् पुत्रादि की वासना से रक्त हुआ स्वयं क-ल्पित छायामात्र अविद्यमान पुत्रादि का स्वप्न में सच्चे से देखता है । उन देखे २ सबों को स्वप्न में ( अनुपश्यति ) वैसे ही प्रत्यक्ष मौजूद के तुल्य देखता है (श्रुतं, श्रुतम्, एव ) ( अ-र्थम् ) इष्ट अनिष्ट वा उदासीनभाव को जताने वाले सुने हुए

शब्दमात्रों को ( अनुशृणोति ) प्रत्यक्ष के तुल्य कानों से जागते समय के तुल्य सुनता है ( च ) और ( देशदिगन्तरैः ) जहां तीर, बाग, बगीचा, ग्राम, वन, नगर आदि देश में चलते, फिरते और पूर्वादि दिशाओं के साथ ( प्रत्यनुभूतम् ) निकलते पैठते, प्रत्येक बार जिस का अनुभव जैसा किया गया हो ( पुनः पुनः ) अनेक रात्रि दिनों में ( प्रत्यनुभवति ) अनेक स्वप्नों में बार २ अनुसन्धान करता है कि यह ऐसा देखा हूं अर्थात् (दृष्टं, च, श्रुतम्, च, अनुभूतम्, च सत्, च) इस वर्तमान जन्म में इन्हीं नेत्रादि से देखा सुना अनुभव किया और विद्यमान ( अदृष्टम्, च, अश्रुतम्, च, अननुभूतम्, च, असत्, च ) न देखा न सुना और न अनुभव किया तथा अविद्यमान जन्मान्तरसम्बन्धी एव ( सर्वम् ) दोनों जन्म के देखे आदि विषय को ( पश्यति ) देखता है और ( सर्वः, पश्यति ) मनुष्यादि कीटपतङ्ग पर्यन्त सभी प्राणीमात्र इसी नियम से स्वप्नों को देखता जानता है ॥

भा०-जितना कुछ विषय नेत्रादि इन्द्रिय वा मन से देखा सुना वा अनुभव किया जाता है उस सब को सब प्राणी स्वप्न में देखता सुनता वा अनुभव करता है स्वप्न का देखने वाला जीवात्मा है । गर्भ में चौथे महीने से ले कर बालक जन्मान्तर के अनुभव किये स्वप्न को ही देखता है । उत्पन्न होने पर भी पांच वर्ष पर्यन्त प्रायः जन्मान्तर के ही स्वप्न को देखता और पीछे प्रायः वर्त्तमान शरीर में देख सुने विषयों के स्वप्न देखता है । यद्यपि जन्मान्तरों में भी इन्द्रियों से ही विषयों का अनुभव होता है जिस से उन विषयों का अदृष्टादि होना नहीं बन सकता तथापि यह ठीक नहीं क्योंकि जिन इन्द्रियों के गोलकों से उन विषयों का अनुभव किया था वे इन्द्रिय गोलक उस जन्मान्तरसम्बन्धी शरीर के साथ

ही नष्ट हो गये और स्वप्न केवल मन से अब अनुभव किये जाते हैं। क्योंकि मन तो वही जन्मान्तरों से बना रहता है। अर्थात वर्त्तमान इन्द्रियों से उस विषय का देखनादि नहीं हुआ इस कारण उस विषय का अदृष्टादि होना बन सकता है। इस मन्त्र में एष पद से पूर्व कहा मन ही लेना चाहिये। यद्यपि विषयों के अनुभव में बुद्धिमान् लोग मन को साधन मानते हैं और क्षेत्रज्ञ आत्मा को स्वतन्त्र कर्त्ता कहते हैं। तथापि मनोरूप उपाधि की ही विषयानुभव में प्रबलता तथा प्रधानता दिखाने के लिये स्वप्नदर्शन का कर्त्ता श्रुति ने मन को ही माना है। कि जैसे वैयाकरण सौकर्यातिशय विवक्षा में कर्म वा करण को कर्त्ता मानते हैं। उस में चित्स्वरूप क्षेत्रज्ञ आत्मा का स्वभाव से निर्मल शुद्ध बंध रहित नित्यमुक्त होनादि दिखाना श्रुति का तात्पर्य है। जैसे गुडहर के फूल आदि रंगीन वस्तु के पास होने से रंगा हुआ सा दीखता हुआ भी स्फटिक मणि वास्तव में स्वरूप से शुद्ध ही होता है। वैसे ही शरीर इन्द्रिय और मन के संयोग से वैसा २ दीखता हुआ भी क्षेत्रज्ञ आत्मा स्वभाव से शुद्ध ही रहता है। ऐसा माने विना कभी मोक्ष हो ही नहीं सकता ॥ ५ ॥

स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीर एतत्सुखं भवति ॥ ६ ॥

सः। यदा। तेजसा। अभिभूतः। भवति। अत्र। एषः। देवः। स्वप्नान्। न। पश्यति। अथ। तदा। एतस्मिन्। शरीरे। एतत्। सुखम्। भवति ॥ ६ ॥

अ०—कस्यैतत्सुखं भवतीत्यस्य प्रश्नस्योत्तरमाह—( यदा ) ( सः ) देवो मनोरूपः ( तेजसा ) ब्रह्मचैतन्यसंबद्धवासनात्मकसूक्ष्मादि-

त्यप्रकाशेन नाडीमध्ये ( अभिभूतः ) आच्छादितः ( भवति ) (अत्र ) अस्यां सुषुप्तावस्थायाम् ( एषः, देवः ) मनोमयो दिव्यरूपः (स्वप्नान् ) ( न, पश्यति ) उक्ततेजसा दर्शनमार्गस्याभिभूतत्वात् । मनश्च स्वनाड्यां निष्क्रियमवतिष्ठते ( अथ ) तेजसाच्छादनानन्तरम् ( अस्मिन्, शरीरे ) ( एतत् ) ब्रह्मात्मसम्बन्धाज्जायमानम् ( सुखम्, भवति ) प्रसन्नात्मकं निराबाधं शरीरव्यापकं सुखं जायते ॥

भा०—सुषुप्तौ समाधौ च समानमेव चित्तस्यैकाग्र्यं भवति । तत्रायं भेदः—समाधौ सत्त्वमुद्भूतं रजस्तमसी तिरो भावयति सुषुप्तौ समुद्भूतं तमः सत्त्वरजसी आच्छादयति । उभयत्र मनोमयआत्मा ब्रह्मण्यवतिष्ठते तत्र समाधौ सत्त्वप्रकाशाद्ब्रह्मानन्दमनुभवति। सुषुप्तौ च सत्यपि ब्रह्मानन्दे तमसाच्छादितो लीनइव मनोमयः सुखमनुभति। अत्र सुषुप्तौ त्रयोऽवान्तरभेदाः। यदा सत्त्वसचिवन्तमआविर्भवति तदा सुप्तोत्थितः प्रत्यभिजानाति—सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदी करोति। अस्मिन्नेव भेदेस्वप्नाभावकाले परमात्मसम्बन्धाज्जायमानं विशिष्टं सुखं भवति । कस्यैतत्सुखं भवति तदैतत्सुखं भवतीति च प्रश्नोत्तराभ्यामस्यैवात्र प्र-

तिपादनं क्रियते। एतच्च सुखमुदानो ब्रह्मप्राप्त्या जनयति। राज्ञा तमसाभिभूतो मनोमयः सुख मेव जानाति न तु बुद्ध्यतेऽहं ब्रह्मस्थस्तत्प्राप्तिजन्यमिदं सुखमिति। यदा च रजोमात्यन्तम आविर्भवति तदा सुप्तोत्थितो वदति दुःखमहमस्वाप्सं स्त्यानमकर्मण्यं मे मनः कस्माद्यतो भ्रमत्यनवस्थितमिति। रजःसत्त्वे नितान्तमभिभूय यदा तमः प्रभवति। तदा सुप्तोत्थित एवं ध्यायति—गाढंमूढोहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति एतद्योगभाष्ये निद्रावृत्तौ व्यासमुनिनोक्तम्। अनयोरवस्थयोश्च ब्रह्मसम्बन्धजन्यं सुखं सुषुप्तस्य न जायते सत्त्वस्य सर्वथाऽऽच्छन्नत्वात् ॥६॥

भाषार्थः—किस को यह सुषुप्ति का सुखानुभव होता है इस प्रश्न का उत्तर कहते हैं ( यदा ) जब ( सः ) वह ज्ञानस्वरूप मनोमय आत्मा ( तेजसा ) ब्रह्मचेतन संबन्धी वासना रूप सूर्य के सूक्ष्म प्रकाश से नाड़ी के बीच ( अभिभूतः ) आच्छादित ( भवति ) होता है ( अत्र ) इस सुषुप्ति अवस्था में ( एष,देवः ) दिव्यरूप मनोमय ( स्वप्नान् ) स्वप्नों को ( न, पश्यति ) नहीं देखता क्योंकि उस समय पूर्वोक्त तेज से स्वप्न भुगाने वाला संचित कर्म का मार्ग रुकजाता है ( अथ ) और सत्त्व गुण सम्बन्धी तेज से आच्छादन हुए पश्चात् (अस्मिन्) इस ( शरीरे ) शरीर में ( एतत् ) परमात्मा के सम्बन्धसे उत्पन्न होने वाला ( सुखम्,भवति ) प्रसन्नतारूप बाधना रहित सब शरीर में व्यापक सुख होता है ॥

भा०-सुषुप्ति और समाधि में चित्त की एकाग्रता तुल्य ही रहती है, उस में भेद यह है कि समाधि में प्रकट या प्रबल हुआ सत्त्वगुण रजोगुण और तमोगुण को दबा लेता है और सुषुप्ति दशा में तमोगुण प्रबल होकर सत्त्वगुण रजोगुण को आच्छादित करलेता है। दोनों दशा में मनोमय आत्मा ब्रह्म में स्थित रहता है । समाधि में तो सत्त्वगुण के प्रकाश में ब्रह्मसम्बन्धी आनन्द का अनुभव करता और सुषुप्ति में ब्रह्म सम्बन्धी आनन्द होते भी तमोगुण से आच्छादित मनोमय आत्मा लीन हुआ सा सूक्ष्म रूप से ब्रह्मानन्द का अनुभव करता है उस सुषुप्ति में भीतरी तीन भेद हैं-जैसे जब तमोगुणरूप राजा का सत्त्वगुण मन्त्री होता है तब सो कर उठा मनुष्य सुषुप्तिदशा के अनुभव किये सुख को कहता है कि सुख पूर्वक मैं सोया मेरा मन प्रसन्न है मेरी बुद्धि स्वच्छ है। इसी भेद में स्वप्न का अभाव होने पर जाग्रत्स्वप्न की भोग हेतु संचित वासना का द्वार रुक जाने पर भगवत्संपर्क से होने वाले विशेष सुख का अनुभव मन करता है। किसको यह सुख होता, ऐसी दशा में यह सुख होता इन प्रश्नोत्तरों से इस प्रसङ्ग में इसी का प्रतिपादन किया है। इस सुख को ब्रह्मप्राप्ति के साथ उदाम प्रकट करता है । तमोगुण राजा से दबा हुआ मनोमय आत्मा सुख मात्र में मग्न रहता है किन्तु यह नहीं जानता कि मैं कहां था कौन हूं किस कारण मुझ को सुख है या नहीं है अर्थात् परमात्मा के सम्बन्ध से मुझको सुख है यह नहीं जानता॥

और जब रजोगुण मन्त्री सहित तमोगुण राजा प्रबल होता है तब सोके उठा हुआ पुरुष कहता है कि मैं दुःख पूर्वक सोया मेरा मन निर्बल वा आलस में है क्योंकि चञ्चल है स्थिर नहीं। और जब रजोगुण सत्त्वगुण दोनों को सर्वथा दबाकर तमोगुण राजा स्वतन्त्र बलवान् होता है वा तमोगुण राजा का तमोगुण ही मन्त्री होता है तब सोकर उठा

पुरुष ऐसा अनुभव करता है कि आज मैं ऐसा गाढ़ निद्रा में सोया मेरा शरीर भारी, मेरे चित्त में ग्लानि, और आलस्य है अर्थात् मानो इसका कुछ चुरा लिया गया ऐसा सुस्त बैठता है। यह तीन प्रकार की निद्रा व्यास जी ने योगभाष्य में लिखी है। इन पिछली दोनों दशा में ब्रह्मसम्बन्धी सुख, सुषुप्ति में रहने वाले को नहीं होता क्योंकि वहां सुख हेतु सत्वगुण सर्वथा दब जाता और दुःखादि के अनुभव हेतु रजोगुण तमोगुण उभड़ जाते हैं ॥ ६ ॥

**स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते । एवं हवै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते ॥ ७ ॥**

सः । यथा । सोम्य । वयांसि । वासः । वृक्षम् । सम्प्रतिष्ठन्ते । एवम् । ह, वै । तत । सर्वम् । परे । आत्मनि । सम्प्रतिष्ठते ॥ ७ ॥

अ०—इदानीमाचतुर्थप्रश्नसमापनात्कस्मिन्नु सर्वं सम्प्रतिष्ठिता भवन्तीत्यस्योत्तरं विवृणोति ( सः ) पिप्पलादः पुनराह । हे ( सोम्य ) चन्द्रवत्प्रियदर्शन ( यथा) ( वयांसि ) काकशुकादिपक्षिणो रजनीप्रमुख इतस्तत उड्डीय स्वस्य नियतम् ( वासः ) वसन्त्यस्मिन्नित्यधिकरणेऽसुन् वृद्धिश्च ( वृक्षम् ) ( सम्प्रतिष्ठन्ते ) ( एवम्, हवै, तत् सर्वम् ) ( परे ) (आत्मनि) ( सम्प्रतिष्ठते ) सुषुप्तिकाले वक्ष्यमाणानि सूक्ष्मस्थूलभूतानि चक्षुरादीनि बाह्यान्तःकरणानि तद्विषयाश्च रूपादय इत्येतत्सर्वं निस्तरङ्गमवृत्तिकं परआत्मन्येवावस्थितं भवतीति ॥

भा०—पूर्वोक्तायां सुषुप्त्यवस्थायां सर्वेन्द्रियवृत्तयः सविषया अविद्यादयः क्लेशास्त्रिविधानि कर्माणि सर्वविधा वासनाश्च,सूर्ये तद्रश्मय इव जले तरङ्गाइव सर्वेऽविद्याकृता उपद्रवाः सबीजा परमात्मन्यवतिष्ठन्ते । शान्तेषु सर्वोपद्रवेषु निरुपाधिकमद्वयं शिवं शान्तं सर्वोपद्रवप्रपञ्चशून्यमात्मस्वरूपं भवतीति दर्शितम् । जाग्रति पुनरुत्थानमेव सबीजावस्थानस्य प्रमाणम्। मोक्षावस्थायां च दग्धबीजकल्पा अविद्यादय आत्मन्यवस्थिता न पुनरुत्तिष्ठन्ति ॥ ७ ॥

भाषार्थः—अब इस चौथे प्रश्न की समाप्ति पर्यन्त किस में सब ठहरते हैं इस का उत्तर दिया जाता है ( सः ) वे पिप्पलाद फिर बोले कि-हे ( सोम्य ) चन्द्रमा के तुल्य देखने में प्रिय ( यथा ) जैसे ( वयांसि ) कौआ शुग्गादि पक्षी सन्ध्या समय इधर उधर से उड़ २ के अपने नियत ( वासः ) बसने के स्थान ( वृक्षम् ) वृक्ष पर ( सम्प्रतिष्ठन्ते ) अच्छे प्रकार स्थित होते ( एवम्, ह्वै, तत्, सर्वम् ) इसी प्रकार यह आगे मन्त्र ८ में कहा सब ( परे) (आत्मनि) परमात्मा में ही ( सम्प्रतिष्ठते ) सुषुप्ति के समय सूक्ष्म स्थूल भूत चक्षु आदि बाह्य करण, मन आदि अन्तःकरण और उन के रूपादि विषय अगले मन्त्र में कहे ये सब वृत्ति वा तरंगों से शून्य हुये, ठहर जाते हैं ।

पूर्वोक्त सुषुप्ति अवस्था में अपने २ विषयों के सहित सब इन्द्रियों की वृत्ति, अविद्यादि क्लेश, त्रिविध कर्म और सब प्रकार की सूक्ष्मवासना, सूर्य में किरणों के तुल्य वा जल में तरंगों के तुल्य अविद्याजनित सभी उपद्रव अपने बीजों स-

हित परमात्मा में ठहर जाते हैं । सुषुप्ति में सबीज लीन होने से ही जागने पर फिर २ अंकुरित होते रहते हैं । सब उपद्रवों के शान्त हो जाने पर उपाधि रहित अद्वैत सब प्रपञ्च उपद्रवों से शून्य आत्मस्वरूप शान्त सुखमय अपने आपे में हो जाता है । जागने पर फिर सब उपद्रवों का दीखना ही सबीजस्थिति का प्रमाणसूचक है । मोक्षावस्था में अविद्यादि क्लेश दग्ध बीज हुए आत्मा में लीन होते हैं इस से फिर नहीं उठते ॥ ७ ॥

पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रश्च श्रोतव्यं च घ्राणं च घ्रातव्य च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्त्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥

पृथिवी । च । पृथिवीमात्रा । च । आपः । च । आपोमात्रा । च । तेजः । च । तेजोमात्रा । च । वायुः । च । वायुमात्रा । च । आकाशः । च । आकाशमात्रा । च । चक्षुः । च । द्रष्टव्यम् । च । श्रोत्रम् । च । श्रोतव्यम् । च । घ्राणम् । च । घ्रातव्यम् । च । रसः । च । रसयितव्यम् । च । त्वक् । च । स्पर्शयितव्यम् । च । वाक् । च । वक्तव्यम् । च । हस्तौ । च । आदातव्यम् । च । उपस्थः । च । आनन्दयितव्यम् । च । पायुः । च । विसर्जयितव्यम् । च । पादौ । च । गन्तव्यम् । च । मनः ।

च । मन्तव्यम् । च । बुद्धिः । च । बोद्धव्यम् । च । अहङ्कारः । च । अहङ्कर्तव्यम् । च । चित्तम् । च । चेतयितव्यम् । च । तेजः । च । विद्योतयितव्यम् । च । प्राणः । च । विधारयितव्यम् । च ॥८॥

अ० (पृथिवी, च,० आकाशमात्रा, च) पञ्च-स्थूलभूतानि पञ्चसूक्ष्मभूतानि च (चक्षुः, च, गन्तव्यम्, च ) दशेन्द्रियाणि तेषां विषयाश्च ( मनः, च,० चेतयितव्यम्, च ) अन्तःकरणचतुष्टयं तद्विषयाश्च (तेजश्च, विद्योतयितव्यम् च) त्वगाश्रयं तेजस्तद्विषयश्च (प्राणश्च ) सूत्रात्मा (विधारयितव्यम्, च) सर्वस्य वेष्टनं विषयः ॥

भा०—पृथिव्यादि सर्वं परमात्मन्येवावस्थितम् ॥८॥

भावार्थः—( पृथिवी, च ) स्थूलरूप और ( पृथिवीमात्रा, च ) सूक्ष्मसुगन्धदुर्गन्धरूप पृथिवी और (आपः, च) स्थूल और ( आपोमा० ) परमाणुरूप सूक्ष्म जल जो शरदी ठाढ़ारूप से शरीर में लगता है ( तेजश्च ) स्थूल अग्नि वा प्रकाश रूप और ( तेजोमा० ) परमाणु रूप सूक्ष्म अग्नितत्व जो गर्मी रूप से देह में लगता है (वायुश्च) स्थूल वायु और (वायुमा०) सूक्ष्म वा स्पर्शमात्र वायु (आकाशश्च) आकाशतत्व और ( आकाशमा० ) अतिसूक्ष्म उसका कारण शब्द रूप ( चक्षुश्च, द्रष्टव्यञ्च ) नेत्र और उस का विषय रूप देखना ( श्रोत्रञ्च, श्रोतव्यञ्च ) कान और उस का विषय शब्द सुनना ( घ्राणञ्च,घ्रातव्यम्, च ) नाक और उस का विषय गन्ध सूंघना ( रसश्च, रसयितव्यम्, च ) जिह्वा और उस का विषय रस का स्वाद लेना और ( त्वक् च, स्पर्शयितव्यम्, च ) त्वचा और उस का विषय छूना ये पांच ज्ञानेन्द्रिय और इन के विषय (वाक्, च, वक्तव्यम्, च ) वाणी और बोलना ( ह-

स्ती, च, आदातव्यम्, च ) हाथ और पकड़ना ग्रहण करना ( उपस्थश्च, आनन्दयितव्यम्, च ) उपस्थ प्रस्राव का इन्द्रिय और उस का विषय मैथुनसम्बन्धी आनन्द ( पायुश्च, विसर्जयितव्यम्, च ) गुदा और विष्ठा का त्यागना ( पादौ, च, गन्तव्यम्, च ) पग और उन का विषय चलना ये पांच कर्मेन्द्रिय और इन के विषय ( मनश्च, मन्तव्यम्, च ) मन और मानने योग्य विषय ( बुद्धिश्च, बोद्धव्यम्, च ) निश्चयात्मिका बुद्धि और उस का विषय निश्चय करना ( अहङ्कारश्चाहङ्कर्त्तव्यम् च ) अभिमान रूप अन्तःकरण की वृत्ति अहङ्कार और उस का विषय (चित्तम्, च चेतयितव्यम्, च) चेतनावली अन्तःकरण वृत्ति चित्त और उस का विषय यह अन्तःकरण चतुष्टय और उन के विषय ( तेजश्च, विद्योतयितव्यम्, च) शरीर में व्याप्त चाम में झलकने वाला तेज और उस का विषय ( प्राणश्च ) सूत्रात्मा वायु और ( विधारयितव्यम्, च ) सब को खैंचकर धारण करना ये सब पृथिव्यादि सुषुप्ति के समय एक परमात्मा में लीन से हो कर ठहर जाते हैं ॥

भा०—पृथिवी आदि सूत्रात्मा प्राण तक गिनायें सब सुषुप्ति के समय परमेश्वर में स्थित हो जाते हैं ॥ ८ ॥

एष हि द्रष्टा श्रोता स्प्रष्टा घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परे अक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥

एषः । हि । द्रष्टा । श्रोता । स्प्रष्टा । घ्राता । रसयिता । मन्ता । बोद्धा । कर्त्ता । विज्ञानात्मा । पुरुषः । सः । परे । अक्षरे । आत्मनि । सम्प्रतिष्ठते ॥ ९ ॥

अ०—अतः पृथिव्यादितः परं यदात्मरूपं जगत्कर्त्तृ तदेवास्मिन् देहे कर्त्तृत्वभोक्तृत्वे-

नानुप्रविष्टमस्मिन्नेव पृथिव्यादिकं सुषुप्ताव-
वतिष्ठते ( एष:,हि ) ( द्रष्टा ) नेत्रेण (श्रोता)
कर्णाभ्याम् ( स्प्रष्टा ) त्वचा ( घ्राता ) नासिक-
या ( रसयिता ) जिह्वया ( मन्ता ) मनसा
( बोद्धा ) प्रज्ञया ( कर्त्ता ) हस्तपादादिभिः
( विज्ञानात्मा ) विज्ञानस्वरूपश्चतुर्थकोषात्मक:
( पुरुष: ) पुरि शरीरे पूर्णः शयिता वा जीवो-
ऽस्ति ( सः ) सोऽपि कालत्रये ( परे ) निर्गुणे
विकारादिशून्ये ( अक्षरे ) अविनाशिनि (आ-
त्मनि ) परमात्मन्येव ( सम्प्रतिष्ठते ) ॥

भा०—यथा वस्त्रसूत्रपिचुकार्पासादिकं सर्वं
कार्यप्रपञ्चरूपं स्वस्य सूक्ष्मबीजाश्रयेणैव सर्वदाऽ
वतिष्ठते तथैव सर्वः प्रपञ्चः स्वोपादाने ब्रह्मण्ये-
वावतिष्ठते ॥ १ ॥

भावार्थः—इस पूर्वोक्त पृथिव्यादि से परे जो सूक्ष्म आत्म-
तत्त्व जगत्का कर्त्ता है वही इस देह में कर्त्ता भोक्तारूप से
प्रविष्ट हुआ जीव कहाता है, उसी में सुषुप्ति के समय उक्त
सब पृथिव्यादि ठहरते हैं। ( एषः, हि ) यही ( द्रष्टा ) आंख
से देखने ( श्रोता ) कानों से सुनने ( स्प्रष्टा ) त्वचा से छूने
( घ्राता ) नाक से सूङ्घने ( रसयिता ) जीभ से स्वाद लेने
( मन्ता ) मन से मानने और ( बोद्धा ) बुद्धि से जानने वाला
तथा ( कर्त्ता ) हाथ पग आदि से क्रिया करने वाला ( वि-
ज्ञानात्मा ) विज्ञान स्वरूप चौथा कोषरूप (पुरुषः ) शरीररूप
नगर में सोने वा व्याप्त होने वाला जीवात्मा है ( सः ) वह
भी तीनों काल में ( परे ) सब से सूक्ष्म ( अक्षरे ) अविनाशी

( आत्मनि ) परमात्मा में ही ( सम्प्रतिष्ठते ) स्थित होता है ॥

भा०—वस्त्र सूत रुई कपासादि सब कार्य प्रपञ्च अपने सूक्ष्म सारांश बीजशक्ति के आश्रय से ही सदा स्वरूप से उपलब्ध होता है। वैसे ही संसार का सब प्रपञ्च अपने उपादान परमात्मा भगवान् विष्णु के आश्रय से ठहरा हुआ है॥९॥

परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य। स सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥१०॥

परम्। एव। अक्षरम्। प्रतिपद्यते। सः। यः। ह वै। तत्। अच्छायम्। अशरीरम्। अलोहितम्। शुभ्रम्। अक्षरम्। वेदयते। यः। तु। सोम्य। सः। सर्वज्ञः। सर्वः। भवति। तत्। एषः। श्लोकः॥ १० ॥

अ०—सर्वतत्त्वविदः फलमुच्यते। हे (सोम्य) प्रियदर्शन कौशल्य ! ( यः ) देवदत्तादिर्विद्वान् (तत्) परोक्षम् ( अच्छायम् ) नास्ति छायान्धकारो यत्र ( अशरीरम् ) सूक्ष्मस्थूललिङ्गशरीरनामरूपसम्बन्धवर्जितम् ( अलोहितम् ) रक्तादिसर्वगुणरहितम् ( शुभ्रम् ) प्रकाशमयम् ( अक्षरम् ) अविनश्वरम् ( वेदयते ) जानाति ( सः ) ( परम्, एव ) ( अक्षरम् ) सूक्ष्मात्सूक्ष्मतरमविनाशिनं निर्गुणमोक्षरम् ( प्रतिपद्यते) प्राप्नोति ( यस्तु ) यश्च परवैराग्यवान् सर्वभावेन तमेव भजते ( सः ) मनुष्यः (सर्वज्ञः) सर्वं सदसद्रूपं धर्माधर्मादीनां तत्त्वं विद्यया जानातीति सर्वज्ञः ( सर्वः ) विद्ययाऽविद्यापनये

परमात्मरूपः सर्वरूपो भवति । ( तत्, एषः, श्लोकः ) अस्मिन् विषये वक्ष्यमाणः श्लोकः प्रमाणम् ॥

भा०—यो विद्वान् सर्वत्रैकत्वमेव पश्यति प्राणमनसोरगोचरं बाह्याभ्यन्तरं शिवं शान्तमजं सत्यं पुरुषं जानाति, यश्चैषणात्रयविनिर्मुक्तः सन्परमात्मानं भजते स मुक्तः सन् ब्रह्माप्नोति कल्याणभाक् च भवति ॥ १० ॥

भाषार्थः—अब तत्त्व को जानने वाले का फल कहते हैं। हे ( सोम्य ! ) देखने में प्रिय कौशल्य (यः) जो विद्वान् (तत्) उस परोक्ष ( अच्छायम् ) जिस में अन्धकार नहीं (अशरीरम्) स्थूल सूक्ष्म और लिङ्ग तीनों प्रकार के शरीर संबन्धी नाम रूप के संबन्ध से रहित (अलोहितम् ) लाल आदि सब वर्णों से भिन्न ( शुभ्रम् ) प्रकाशरूप ( अक्षरम् ) अविनाशी परमेश्वर को ( वेदयते ) जानता है (सः) वह (परम्, एव ) सूक्ष्म से सूक्ष्म ( अक्षरम् ) अविनाशी निर्गुण परमात्मा को ( प्रतिपद्यते ) प्राप्त होता है ( यस्तु ) और जो परवैराग्य से युक्त हुआ सब प्रकार से उसी की उपासना करता है ( सः ) वह ज्ञानी मनुष्य ( सर्वज्ञः ) धर्म अधर्म और सत्यासत्य के तत्त्व को विद्या से जानने वाला होता है, विद्या द्वारा अविद्या का नाश होने पर ( सर्वः ) सर्वरूप नाम परमात्मरूप हो जाता है। ( तत्, एषः, श्लोकः ) इस विषय में आगे कहा श्लोक वा मंत्र प्रमाण है ॥

भा०—जो विद्वान् सर्वत्र एक ही वस्तु को देखता, तथा इन्द्रिय और मन से परे बाहर भीतर शान्त शुद्ध स्वरूप अज सत्य परमेश्वर तत्त्व को जानता है और जो धन पुत्र और

प्रतिष्ठा की इच्छा से रहित हुआ परमात्मा की ही उपासना करता है वह मुक्त हुआ ब्रह्म को प्राप्त और कल्याणभागी होता है ॥ १० ॥

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र । तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥

विज्ञानात्मा । सह । देवैः । च । सर्वैः । प्राणाः । भूतानि । सम्प्रतिष्ठन्ति । यत्र । तत् । अक्षरम् । वेदयते । यः । तु । सोम्य । सः । सर्वज्ञः । सर्वम् । एव । आविवेश । इति ॥ ११ ॥

अ०—( विज्ञानात्मा ) नवममन्त्रोक्तएवात्मा ( सर्वैः, देवैः ) अग्न्याद्यधिष्ठातृदेवैः (सह) ( यत्र ) यस्मिन्नक्षरे सम्प्रतिष्ठते ( प्राणाः ) पूर्वोक्ताश्चक्षुरादयः (भूतानि, च) पृथिव्यादीनि यस्मिन् ( सम्प्रतिष्ठन्ति ) हे ( सोम्य ! ) (यस्तु) ( तत्, अक्षरम् ) ( वेदयते ) जानाति ( सः ) उक्तप्रकारेण ( सर्वज्ञः ) सर्वं जानाति ( सर्वम् ) परिच्छिन्नतां विहायैकात्म्यप्रत्ययसारम् ( आविवेश) प्रविशति ब्रह्मप्राप्तो मुक्तो भवति (इति) प्रश्नसमाप्तिसूचनार्थः ॥

अ०—यस्मिन् ब्रह्मणि चराचरं सर्वं जगदवस्थितमसत्कल्पितं प्रतिभाति मायया तद्यो विद्वान् सर्वशास्त्रतत्त्वज्ञो जानाति स सर्वदुःखविमुक्तो जायते ॥ ११ ॥

भावार्थः—( विज्ञानात्मा ) विज्ञानस्वरूप आत्मा ( सर्वैः, देवैः ) अग्नि आदि के अधिष्ठातृ देवों के ( सह ) सहित (यत्र)

जिस में ठहरना तथा (प्राणाः) पूर्वोक्त चक्षु आदि प्राण (भूतानि, च) और पृथिवी आदि पञ्चभूत जिस में (सम्प्रतिष्ठन्ति) सम्यक् ठहरते लीन होते हैं। हे (सोम्य) प्रियवर! (यस्तु) जो तो (तत्, अक्षरम्) उस अविनाशी परमात्मा को (वेदयते) जानता है (सः) वह पूर्व कहे अनुसार (सर्वज्ञः) सब सत्यासत्य धर्माधर्म को जानता है और वह ज्ञानी (सर्वम्) परिच्छिन्नतारूप जीवभाव को छोड़के एकात्म प्रतीतिरूप सोहंभाव को प्राप्त होता है (इति) यह चतुर्थ प्रश्न समाप्त हुआ॥

भा०-जिस ब्रह्म में सब चराचर जगत् स्थित अनादिकल्पित माया से भासित होता है जो उस सब शास्त्रों के तत्त्व को जानने वाला विद्वान् सम्यक् जानता है वह सब दुःखों से छूट जाता है॥ ११॥

इति चतुर्थः प्रश्नः समाप्तः॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति॥१॥

अथ। ह। एनम्। शैब्यः। सत्यकामः। पप्रच्छ। सः। यः। ह वै। तत्। भगवन्। मनुष्येषु। प्रायणान्तम्। ओङ्कारम्। अभिध्यायीत। कतमम्। वाव। सः। तेन। लोकम्। जयति। इति॥ १॥

अ०-(अथ) गार्ग्यकृतप्रश्नस्योत्तरश्रवणानन्तरम् (एनम्) पिप्पलादमृषिम् (शैब्यः) शिवेः पुत्रः (सत्यकामः) एतन्नामकऋषिः (ह, पप्रच्छ) पृष्टवान्। हे (भगवन्!) (मनुष्येषु) (यः, सः, ह वै) प्रसिद्धस्तपस्वी यमनियमादियोगाङ्गानु-

ष्ठानतत्परः ( प्रायणान्तम् ) यावज्जीवंमरणान्तम् ( ओङ्कारम् ) प्रतीकोपासनरीत्या ब्रह्मभावारोपेणौङ्कारम् ( अभिध्यायीत ) तदाकारवृत्त्या शब्दादिविषयेभ्यो निवर्त्तितेन्द्रियवृत्तिः समाहितचित्तो निर्वातस्थदीपकसमाचलान्तःकरणतरङ्ग आत्मसम्बन्धिप्रत्ययसन्तानाविच्छेदक उपासक आभिमुख्येन चिन्तयेत् ( सः ) ( तेन ) अभिध्यानेन ( कतमम् ) पृथिव्यादिषु कम् ( लोकम् ) ( वाव ) निश्चयेन ( जयति ) अर्थात् कुत्राधिष्ठाता भवति ( इति ) एवम्भूतः प्रश्नोऽस्ति ॥

भावार्थः—यो गृहाश्रमादिस्थसंसारिसुखं परिहायाजन्ममरणाद्ब्रह्मचारी सन् योगाभ्यासतपश्चरणपुरस्सरं ब्रह्मोपास्ते। स कीदृशं फलमधिकारं वा लभत इति सत्यकामः पिप्पलादं पृच्छति ॥ १ ॥

भाषार्थः—( अथ ) अब गार्ग्यकृत प्रश्न का उत्तर सुनने पश्चात् ( एनम् ) इन पिप्पलाद ऋषि को ( शैव्यः ) शिविनामक ऋषि के पुत्र ( सत्यकामः ) सत्यकाम ऋषि ने ( ह,पप्रच्छ ) प्रकट पूछा कि हे ( भगवन् ) गुरो ! ( मनुष्येषु ) मनुष्यों में (यः, सः, ह्वै) जो वह प्रसिद्ध तपस्वी यमनियमादि योग के अङ्गों का अनुष्ठान करने में तत्पर हुआ ज्ञानी विद्वान् (प्रायणान्तम्) जन्म से मरणपर्यन्त (ओङ्कारम् ) प्रतीकोपासना की रीति पूर्वक ब्रह्म भावना के आरोप से ओङ्कार का ( अभिध्यायीत ) शब्दादि विषयों से इन्द्रियों की वृत्ति को

जिस ने निवृत्त किया, समाहित स्वस्थ जिस का चित्त, निर्वातस्थान में निश्चल दीपज्योति के तुल्य जिसका मन अचल हो जिस की ज्ञानवृत्तियों का तार आत्मा के साथ ही बराबर लगा हो ऐसा उपासक तदाकार वृत्ति से सन्मुख हुआ चिन्तन करे ( सः ) वह ( तेन ) उस ध्यान से ( कतमम् ) पृथिव्यादि में से किस ( लोकम् ) लोक का ( वाव ) निश्चय कर ( जयति ) अधिष्ठाता होता है ( इति ) यह मेरा प्रश्न है॥

भा०—सत्यकाम ऋषि पिप्पलाद ऋषि से यह पूछते हैं कि जो ज्ञानी विद्वान् गृहाश्रमादि में होने वाले संसारी सुख को छोड़ के जन्म भर ब्रह्मचर्य धारण किये योगाभ्यास और तप करता हुआ प्रणवद्वारा ब्रह्म की उपासना करता है वह कैसे फल वा अधिकार को पाता है ॥ १ ॥

तस्मै स होवाच । एतद्वै सत्यकाम परञ्चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥

तस्मै । सः । ह । उवाच । एतत् । वै । सत्यकाम । परम् । च । अपरम् । च । ब्रह्म । यत् । ओङ्कारः । तस्मात् । विद्वान् । एतेन । एव । आयतनेन । एकतरम् । अन्वेति ॥ २ ॥

अ०—( तस्मै ) सत्यकामाय ( सः ) पिप्पलादो महर्षिः ( ह, उवाच ) प्रकटमिदमुवाच हे ( सत्यकाम ! ) ( परम्, च ) शब्दाद्युपलक्षणानर्हं सर्वधर्मविशेषवर्जितं सत्यमक्षरमतीन्द्रियं निर्गुणं तुरीयम् ( अपरम्, च ) सोपाधिकं सगुणं तस्मिंस्तस्मिंस्तत्तदाकारेण भासमानं विष्ण्वादिप्रतिमास्थानीये ओङ्कारे भक्त्यावेशितब्रह्मभावे ध्येयमपरं प्राणाख्यं (ब्रह्म) ब्रह्म

( एतद्वै ) एतदेवास्ति ( यत् ) ( ओङ्कारः ) ओङ्कारप्रतीकत्वादपरप्रत्यायकत्वाच्चौङ्कारएवोभयविधंब्रह्म ( तस्मात् ) कारणात् ( विद्वान् ) ज्ञानी पुरुषः ( एतेनैव, आयतनेन ) सगुणोपासनेनैव ( एकतरम् ) परमपरं वा ब्रह्म ( अन्वेति ) आनुकूल्येनाप्नोति ॥

भा०—यद्यपि परं निर्गुणं निराकारमेव मुख्यं, तथापि यदोङ्कारस्तदेव परं चापरं च ब्रह्मेति वदता सगुणस्य प्राधान्यमुच्यते। सगुणं स्वयं लक्ष्यं सदलक्ष्यमपि लक्षयतीति, यच्च स्वयमलक्ष्यं तदन्यत्कथं लक्षयेत्। प्रणवोपि शब्दात्मकत्वात्सगुणः, सर्वसगुणोपासनेषु प्रणवोपासनालम्बनमेव ब्रह्मावगतेरन्तरङ्गं साधनमिति ॥

भाषार्थः—( तस्मै ) उन सत्यकाम से ( सः ) वे पिप्पलाद महर्षि ( ह, उवाच ) बोले कि हे—( सत्यकाम ! ) सत्य काम ( परम् च ) सब विशेष धर्मों से वर्जित शब्दादि से उपलक्षित न होने योग्य, सत्य अविनाशी अतीन्द्रिय निर्गुण तुरीय पर और ( अपरम्, च ) विष्णु आदि देवों की प्रतिमा के तुल्य ओंकार में भक्ति द्वारा ब्रह्मभावारोप करके ध्यान करने योग्य उस २ वस्तु में उसी २ जैसा दीखता हुआ सगुण साकार प्राणादि रूप अपर ( ब्रह्म ) ब्रह्म ( एतद्वै ) यही है ( यत् ) जो ( ओङ्कारः ) अपर की प्रतीति कराने वाला होने और प्रणव शब्दात्मक चिन्ह से ज्ञान होने से ओंकार ही दोनों प्रकार का ब्रह्म कहा है ( तस्मात् ) तिस से ( वि-

द्वान् ) ज्ञानी पुरुष ( एतेन, एव, आयतनेन ) सगुण साकार को उपासनासे ही (एकतरम्) पर वा अपर दो में एक ब्रह्म को (अन्वेति ) अनुकूलता से प्राप्त होता है ॥

भा०—साकार, निराकार, सगुण निर्गुण यह दो प्रकार का ब्रह्म है। इन में यद्यपि निराकार मुख्य है तथापि इस द्वितीय मन्त्र में "जो ओंकार है वही पर अपर उभय विध ब्रह्म है" इस कथन से सगुण की मुख्यता कही है क्योंकि सगुण में तो निर्गुण भी ज्ञानाञ्जन लगाने पर दीखता है और निर्गुण में सगुण भी नहीं दीख सकता। अर्थात् सगुण स्वयं दृश्य हुआ निर्गुण को भी लखाता है। और जो निर्गुण स्वयं अलख है वह सगुण को कैसे लखा सकता है। प्रणव भी शब्दात्मक होने से सगुण ब्रह्म है, अत्र सगुणोपासनाओं में प्रणवरूप प्रतीकोपासना का अवलम्ब ही ब्रह्म प्राप्ति का मुख्य साधन है ॥ २ ॥

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥ ३ ॥

सः । यदि । एकमात्रम् । अभिध्यायीत । सः । तेन । एव । संवेदितः । तूर्णम् । एव । जगत्याम् । अभिसम्पद्यते । तम् । ऋचः । मनुष्यलोकम् । उपनयन्ते । सः । तत्र । तपसा । ब्रह्मचर्येण । श्रद्धया । सम्पन्नः । महिमानम् । अनुभवति ॥ ३ ॥

अ०—( सः ) सगुणोपासकः ( यदि ) ( एकमात्रम् ) मात्राविभागज्ञानराहित्येनाविभक्तमात्रमोङ्कारम् ( अभिध्यायीत ) ( सः ) उपासकः पुरुषः ( तेन, एव ) एकमात्रोपासनेनैव ( संवेदितः ) सम्बोधितः सचित्तो जागरि-

तः सन् (तूर्णम्, एव) शीघ्रमेव (जगत्याम्) पृथिव्याम् ( अभिसम्पद्यते ) उभयतो राज्यादि सर्वोत्तमसुखसामग्रीसम्पन्नो भवति । ( तम् ) उपासकम् ( ऋचः ) ऋग्वेदरूपा एका मात्रा ( मनुष्यलोकम् ) मनुष्यसमुदायेऽधिष्ठातृत्वेन ( उपनयन्ते ) प्रतिष्ठितमुपनयनेन संस्कृतमिव स्थापयन्ति ( सः ) ( तत्र ) तेषु मनुष्येषु ( तपसा,ब्रह्मचर्येण,श्रद्धया ) च ( सम्पन्नः ) नक्षत्रेषु चन्द्रमाइव भ्राजमानः ( महिमानम् ) महत्त्वम् ( अनुभवति ) ॥

भा०—अकारं चाप्युकारं च मकारं च प्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च॥

इति मनुवाक्यादोमित्यस्मिन्वेदत्रयस्य समावेशः । वेदत्रयरूपओङ्कारोऽपरं शब्दात्मकं ब्रह्म । कर्म, उपासना, ज्ञानमिति वेदस्य त्रयो मुख्या विषयाः । भूः भुवः, स्वः, इति त्रयो मुख्या लोकास्तत्रैकैकेन यथासंख्यं सम्बन्धः । परमात्मा स्वस्य चतुर्थांशसामर्थ्येन सर्वमिदं जगद्व्यरचयत् स्वतुरीयांशेन स जगद्रूपो ऽभवत् । तच्च यजुर्वेद उक्तम् "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति" । जगत्यसंख्यविचित्रकार्येण ब्रह्मणः सर्वज्ञत्वं यदनुमीयते तच्चतुर्थांशस्य ज्ञानस्यैवानुमानं जायते । मात्रा

त्र्यात्मकओंकार उपास्यइत्यज्ञात्वा किन्त्वेकाकारमात्रमुपास्यं ज्ञात्वोपास्ते सोऽपि भूर्लोके तपआदिजन्यं महत्त्वमनुभवति नतु श्रद्धाहीनो धर्माचारभ्रष्टो दुर्गतिं गच्छति ॥ ३ ॥

भाषार्थः-( सः ) वह सगुणोपासक ( यदि ) जो ( एकमात्रम् ) ओंकार की मात्रा का विभाग न जानने पूर्वक एकमात्र ओंकार का ( अभिध्यायीत ) अभिध्यान करे (सः) वह उपासक पुरुष ( तेन, एव ) उस एकमात्रिक उपासना से ही ( संवेदितः) सचेत अपने कर्त्तव्य में उद्योगी ब्रह्मसम्बन्धी ज्ञान के प्रकाश से युक्त हुआ ( तूर्णम्, एव ) शीघ्र ही ( जगत्याम् ) पृथिवी पर ( अभिसम्पद्यते ) राज्य आदि सर्वोत्तम सुख भोग की सामग्री से सब प्रकार युक्त होता है ( तम् ) उस उपासक पुरुष को ( ऋचः ) ओंकार की ऋग्वेद रूप एक मात्रा ( मनुष्यलोकम् ) मनुष्यों में सर्वोत्तम होने के सम्बन्ध से ( उपनयन्ते ) यज्ञोपवीत संस्कार से पवित्र प्रतिष्ठित हुए के तुल्य आदर वा मान्य का हेतु होती हैं ( सः ) वह पुरुष ( तत्र ) उन मनुष्यों में ( तपसा ) तप ( ब्रह्मचर्येण ) ब्रह्मचर्य और ( श्रद्धया ) श्रद्धा से ( सम्पन्नः ) युक्त नक्षत्रों में चन्द्रमा के तुल्य शोभा वा प्रकाश से युक्त हुआ (महिमानम्) महिमा का ( अनुभवति ) अनुभव करता है । अर्थात् महती सुख संपत्ति का भागी होता है ॥

भा०-मनुस्मृति में लिखा है कि "अ, उ, म्" इन तीन वर्णों को ऋगादि तीन वेदों से परमेश्वर ने निकाल कर तीनों को मिला कर "ओम्" नाम रक्खा है । इस से तीनों वेद का संयोग ओम् में है यही वेदत्रय रूप ओंकार शब्दात्मक अपर ब्रह्म है ( जैसे ओंकार में सब मात्रा मिश्रित हैं वैसे ऋग्वेद में भी अन्य वेदों का सदम समावेश है ) और

कर्म उपासना ज्ञान ये वेद के मुख्य तीन विषय हैं तथा भूः भुवः, स्वः, ये तीन ही मुख्य लोक हैं, उन तीन मात्रा, कर्म उपासना ज्ञान और लोकों का यथाक्रम सम्बन्ध है, पहिले के साथ पहिले का दूसरे से दूसरे का तथा तीसरे से तीसरे का है। परमेश्वर ने अपना चतुर्थांश से इस सब जगत् को बनाया है अर्थात् वह अपने चतुर्थांश से जगत् रूप हुआ है। सो यजुर्वेद में कहा भी है कि इस परमेश्वर का एकांश यह जगत् है। जगत् में असंख्य विचित्र कार्यों के देखने से परमेश्वर का सर्वज्ञ होना जो अनुमान किया जाता है वह चतुर्थांश ज्ञान का अनुमान होता है। अमुक २ तीन मात्रा वाला ओंकार उपास्य है ऐसा न जानकर किन्तु एकाकार मात्र को उपास्य जान के जो उपासना करता है वह भी इस मृत्युलोक में तप आदि के प्रभाव से हुई महिमा का अनुभव करता है। किन्तु ऐसा उपासक श्रद्धा से हीन धर्माचरण से भ्रष्ट हुआ दुर्गति को नहीं प्राप्त होता है ॥ ३ ॥

अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते स सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्त्तते ॥ ४ ॥

अथ। यदि। द्विमात्रेण। मनसि। सम्पद्यते। सः। अन्तरिक्षम्। यजुर्भिः। उन्नीयते। सः। सोमलोकम्। सः। सोमलोके। विभूतिम्। अनुभूय। पुनः। आवर्त्तते ॥ ४ ॥

अ०—(अथ) एकमात्राध्यानानन्तरम् (यदि) (द्विमात्रेण) द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कारमभिध्यायीत यावज्जीवम्। (सः) उपासकः (मनसि) मननीये यजुर्वेदमये सोमदैवत्ये (सम्पद्यते) एकाग्रचेतसा सात्म्यभावं गच्छति सएवं संपन्नो मरणावसरे (यजुर्भिः)

द्वितीयमात्रारूपैर्यजुर्भिः (अन्तरिक्षम्) अन्तरिक्षगतलोकेषु (उन्नीयते) उत्कृष्टतया प्राप्यते (सः) उपासकः (सोमलोकम्) चन्द्रलोकं प्राप्नोति (सः, सोमलोके) (विभूतिम्) सर्वैश्वर्येण जायमानमानन्दम् (अनुभूय) (पुनः आवर्त्तते) पृथिव्यां ब्राह्मणादिषु पुनरुत्पद्यते ॥

भा०—वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदइति शतपथे। अ, उ, म्, इति च ऋगादीनां प्रधाना अंशाः। वाक्कर्मप्रधान ऋग्वेदः, मनःकर्मप्रधानो यजुर्वेदः। प्राणक्रियाप्रधानः सामवेदः। वागेव भूर्लोको मनो भुवर्लोकः प्राणः स्वर्लोक इत्यपि तत्रैव शतपथेऽस्ति। तेनैकांशोपासनया वाक्कर्मप्रधानायां पृथिव्यामुपासकोऽधिष्ठातृत्वं लभते। द्विगुणितोपासनया च मनःकर्मप्रधानेषु चन्द्रादिलोकेषु विशेषतो मानससुखमनुभवति यद्वा भूर्लोकोऽध्यात्मविद्यायां नाभिस्थलं ततएव वागुत्पद्यते। भुवर्लोको हृदयाकाशस्तत्रैव मनस्तिष्ठति। स्वर्लोकः शिरस्तत्रैव चक्षुरादिषु प्राणस्तिष्ठति। वागादीनां च तत्तत्कर्मप्रधानत्वादृगादिभिः सम्बन्ध इत्येवं शरीरेऽपि व्याख्यानं युक्तमेव। तत्रापि समुदायस्या-

धिष्ठातैव जायते । मानसं मनसेत्रायमुपभुङ्क्ते शुभाशुभमिति मानवं वाक्यमप्यनेतेन संगतं भवति । मध्यमोपासनेन मध्यममेव सुखमाप्नोतीति तात्पर्य्यम् ॥ ४ ॥

भाषार्थः—एकांश ध्यान के कहने पश्चात् ( यदि ) जो ( द्विमात्रेण) दो मात्रा का विभाग न रखता हुआ दो मात्राओं से युक्त ओङ्कार का जन्म भर ध्यान करे ( सः ) वह उपासक ( मनसि ) मनन करने योग्य यजुर्वेद रूप सोम देवता संबन्धी अंश में ( सम्पद्यते ) एकाग्रचित्त हुआ तात्म्यभाव को प्राप्त होता है वह ऐसा सम्पन्न हुआ मरण समय द्वितीय मात्रा रूप यजुर्द्वारा ( अन्तरिक्षम् ) अन्तरिक्ष में रहने वाले लोकों में ( उन्नीयते ) उन्नति दशा को प्राप्त होता है । पीछे ( सः ) वह उपासक ( सोमलोकम् ) चन्द्रलोक को प्राप्त होता है पीछे ( सः ) वह उपासक ( सोमलोके ) चन्द्रलोक में (विभूतिम् ) मन सम्बन्धी सब सुख देने वाली सामग्री से उत्पन्न आनन्द का ( अनुभूय ) अनुभव करके पृथिवी पर ब्राह्मण अधिकारियों के कुल में ( पुनः, आवर्त्तते ) फिर उत्पन्न होता है ॥

भा०—शतपथ ब्राह्मण में लिखा है कि वाणी ही ऋग्वेद मन यजुर्वेद और प्राण सामवेद है । तथा अ, उ, म्, ये ऋग्वेदादि के मुख्य अंश हैं ऋग्वेद में वाणी का कर्म स्तुति प्रधान है यजुर्वेद में मन का कर्म उपासना प्रधान है और सामवेद में प्राण की क्रिया ज्ञान मुख्य है । वाणी भूर्लोक अर्थात् भूर्लोक में वाणी का कर्म प्रधान है मन भुवर्लोक अर्थात् उस में मन का कर्म मुख्य है और प्राण स्वर्लोक अर्थात् उस में प्राण का कर्म पुरुषार्थ ज्ञान ही प्रधान है । अथवा यों कहो

कि जहां ज्ञानकाण्ड मुख्य है वही स्वर्लोक है अर्थात् उसी का नाम स्वर्ग है, क्योंकि मुख्यसुख ज्ञान से ही होता है तथा अध्यात्म विचारानुसार इस शरीर में भी भू आदि की व्यवस्था ठीक लगजाती है जैसे नाभिस्थ भूर्लोक है वही वाणी का उत्पत्ति स्थान है। हृदयाकाश भुवर्लोक [अन्तरिक्ष] है, उसी में मन रहता तथा शिर में स्वर्लोक है वही मुख्यकर प्राण का स्थान है। नाभि में वाणी के साथ ऋग्वेद, हृदयमें मन के साथ यजुर्वेद और शिर में प्राण के साथ सामवेद है। यह भी शतपथब्राह्मण का लेख है, इस से यह आया कि एकांश उपासना से उपासक पुरुष पृथिवी पर अधिष्ठाता राजा होता है और द्विगुणी उपासना से मानस कर्म की जहां प्रधानता है उन चन्द्रादि लोकों में मानस सुख का अनुभव करता और वहां भी समुदायका अधिष्ठाता ही होता है। मनुस्मृति में लिखा है कि मन सेकिये शुभ अशुभ कर्म का फल मन से ही भोगता है यह भी इस से संगत होता है अर्थात् मध्यम उपासना से मध्यम ही सुख को प्राप्त होता है ॥ ४ ॥

**यः पुनरेतत्त्रिमात्रेणैवोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ ५ ॥**

यः। पुनः। एतत्। त्रिमात्रेण। एव। ओम्। इति। अनेन। एव। अक्षरेण। परम्। पुरुषम्। अभिध्यायीत। सः। तेजसि। सूर्ये। सम्पन्नः। यथा। पादोदरः। त्वचा। विनिर्मुच्यते। एवम्। ह वै। सः। पाप्मना। विनिर्मुक्तः। सः। सा-

सभिः । उन्नीयते । ब्रह्मलोकम् । सः । एतस्मात् । जीवघनात् । परात् । परम् । पुरिशयम् । पुरुषम् । ईक्षते । तत् । एतौ । श्लोकौ । भवतः ॥ ५ ॥

अ०—अथोत्तमोपासनाफलमभिधत्ते ( यः ) ( पुनः ) उपासकः ( एतत् ) एतेन ( ओम्, इ-त्यनेनैव, त्रिमात्रेण ) ( अक्षरेण ) अविनाशि-ना प्रतीकेन ( परम् ) सर्वस्मात्सूक्ष्मं सूर्यान्तर्ग-तम् ( पुरुषम् ) पूर्णं व्याप्तं परमात्मानम् ( अ-भिध्यायीत ) आभिमुख्येन तदाकारवृत्त्या यो-गाभ्यासरीत्या च ध्यानं कुर्वीत ( सः ) उपास-को मरणावसरे ( तेजसि ) तेजोवर्द्धके ( सूर्ये ) मूर्द्धस्थे प्राणे ( सम्पन्नः ) संयुक्तो भोक्तृपुरुष-शक्तिं समाश्रितः ( यथा, पादोदरः ) उदरमेव पादा यस्य स सर्पो यथा ( त्वचा ) ( विनि-र्मुच्यते ) ( एवम्, हवै ) तथैव ( सः ) उपास-कः ( पाप्मना ) अन्तःकरणस्य मलिनसंस्कार जन्यवासनावृत्त्या ( विनिर्मुक्तः ) निर्मलः सन् ( सः, सामभिः ) तृतीयमात्रारूपैः प्राणैः साकम् ( ब्रह्मलोकम् ) ब्रह्मणो हिरण्यगर्भस्य सत्वाख्यं लोकं गच्छति तदा ( सः ) ( एतस्मात् ) ब्रह्म लोकात् ( जीवघनात् ) सर्वजीवसमष्टिरूपाज्जी-वसंघातरूपाद् ब्रह्मणः ( परात् ) परं सूक्ष्मं का-रणं तस्मादपि ( परम् ) सूक्ष्मम् ( पुरिशयम् )

पुरि ब्रह्माण्डे शयानमिव स्थितम् ( पुरुषम् )-पूर्णं परमात्मानम् ( ईक्षते ) ज्ञानदृष्ट्या पश्यति ( तदेतौ, श्लोकौ, भवतः ) एतस्यैव विषयस्य प्रतिपादकौ वक्ष्यमाणौ मन्त्रौस्तः ॥

भा०—यः सर्वथा सर्वदा मनसा वाचा कर्मणा सर्वांशेन ब्रह्मोपास्ते स प्रयाणकाले सर्वविधं पापमालिन्यं साम्प्रतं देहं च सर्पः कञ्चुकमिव विहाय निर्मलः सन् प्राणक्रियाप्रधानेन सामवेदाश्रयेन ज्ञानेन भोक्तृशक्त्यात्मज्ञानसम्ब-उज्जायमानं सर्वबाधाविनिर्मुक्तं मुक्तिसुखमनुभवति । उपात्तं शरीरं विहाय पुनः सृष्टौ नैव जायते ॥ ५ ॥

भावार्थः—अब उत्तम प्रकार की उपासना का फल कहते हैं ( यः, पुनः ) फिर जो उपासक ( एतत ) इस ( ओम्, इत्यनेन, त्रिमात्रेण, अक्षरेण ) ओम्, इस तीन मात्रा वाले अविनाशी प्रतीक से ( परम् ) सब से सूक्ष्म सूर्यमण्डलान्तर्गत ( पुरुषम् ) पूर्ण व्याप्त परमात्मा को ( अभिध्यायीत ) सन्मुख हो कर तदाकार वृत्ति और योगाभ्यास की रीति से ध्यान करे ( सः ) वह उपासक मरण समय में ( तेजसि ) तेज के बढ़ाने वाले ( सूर्ये ) शिर नाम स्वर्लोकस्थ प्राण में ( सम्पन्नः ) संयुक्त हुआ अर्थात् भोक्तारूप पुरुष की शक्ति का आश्रय लिये ( यथा, पादोदरः ) जैसे सांप ( त्वचा ) पुरानी चमड़ी कैंचुली से ( विनिर्मुच्यते ) छूट जाता और निर्मल हो जाता है ( एवम्, ह वै ) वैसे ही ( सः ) वह उपासक ( पाप्मना ) अन्तःकरण के मलिन संस्कार से हुई वासनारूप

अशुद्धवृत्ति से (विनिर्मुक्तः) छूटा निर्मल हुआ (सः, सामभिः) वह तीसरी मात्रारूप प्राणों के साथ (ब्रह्मलोकम्) ब्रह्मा जी के सत्यलोक को प्राप्त होता तब (सः) वह उपासक (एतस्मात्) इस ब्रह्मलोक से (जीवघनात्) सब जीवों के समष्टि रूप अर्थात् जीवों के संघातरूप ब्रह्मा जी से (परात्) परे नाम सूक्ष्म जो कारण उस से भी (परम्) सूक्ष्म (पुरिशयम्) ब्रह्माण्ड में सोते के तुल्य अवस्थित (पुरुषम्) पूर्ण परमेश्वर को (ईक्षते) ज्ञानदृष्टि से देखता है (तदेतौ, श्लोकौ भवतः) इसी विषय को कहने वाले अगले दो मन्त्र प्रमाण हैं॥

भा०—जो उपासक सब प्रकार से सब काल में मन वाणी कर्म से सब रीति से ब्रह्म की उपासना करता है वह मरते समय सब प्रकार की पापरूप मलिनता को तथा वर्त्तमान शरीर को जैसे सांप केंचुली को छोड़े वैसे छोड़के निर्मल हुआ प्राण क्रिया जिस में मुख्य है उस सामवेद के आशयरूप ज्ञान से भोक्तृशक्तिरूप आत्मा के ज्ञानसम्बन्ध से हुए सब बाधाओं से पृथक् मुक्तिसुख का अनुभव करता है अर्थात् प्राप्त शरीर को छोड़ कर मुक्तिकाल की अवधि तक सृष्टि में जन्म नहीं लेता ॥ ५ ॥

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥६॥**

तिस्रः । मात्राः । मृत्युमत्यः । प्रयुक्ताः । अन्योऽन्यसक्ताः । अनविप्रयुक्ताः । क्रियासु । बाह्याभ्यन्तरमध्यमासु । सम्यक्प्रयुक्तासु । न कम्पते । ज्ञः ॥ ६ ॥

अ०—(अन्योऽन्यसक्ताः) परस्परं सम्बद्धाः (अनविप्रयुक्ताः) विशेषेणैकैकविषये न प्रयुक्ता विप्रयुक्ताः नविप्रयुक्ता अविप्रयुक्ताः, न अवि-

प्रयुक्ता अनविप्रयुक्ताः। अर्थादेकस्मिन् ध्यान-
काले प्रयोगकाले वा सर्वाः सहैवोपयुक्ताः (मृ-
त्युमत्यः) मृत्युर्विद्यत आसामिति प्रयोक्तृणा-
मभावे प्रयोगाभाव एव तासां मृत्युः प्रलयाव-
सरे च प्रयोक्तारो जीवात्मानोऽशरीरा न प्रयु-
ञ्जते (प्रयुक्ताः) उपासनावसरे उपयुक्ता ओङ्का-
रस्य (तिस्रः) (मात्राः) सन्ति (बाह्याभ्यन्तरमध्य-
मासु) जाग्रदवस्थायां बाह्या स्वप्ने मध्यमा सुषु-
प्तावाभ्यन्तरा तासु योगाभ्याससंबन्धिनीषु (क्रि-
यासु) (सम्यक्प्रयुक्तासु) उपयुक्तासु मात्रासु यो-
गाभ्यासकालेऽवस्थितो (ज्ञः) ज्ञानयोगतत्परो
योगी (न, कम्पते) चलितो विचलितो न भवति॥

भा०—ओङ्कारस्य तिस्रो मात्रा इतरेतरं यथा
सम्बद्धास्तथैव शब्दार्थप्रत्ययानामितरेतराध्या-
सेनोमिति नाम्ना सम्बद्धासु सम्प्रज्ञातासम्प्रज्ञा-
तसमाधिपरासु जाग्रत्स्वप्नसुषुप्तावस्थासु योगा-
भ्यासेन योगी मनो नियुनक्ति तदा समाधिज-
न्यफलान्न विचलति ॥ ६ ॥

भाषार्थः-( अन्योन्यसक्ताः ) एक दूसरी से मिली ( अ-
नविप्रयुक्ताः ) एक समय के प्रयोग में वा ध्यान में सब का
साथ ही उपयोग हो ऐसी ( मृत्युमत्यः ) मृत्यु वाली [ अर्था-
त् प्रलय के समय जीवात्माओं के शरीर रहित होने से प्रयो-
ग नहीं होता सो प्रयोग न होना ही उन का मृत्यु है ]
और ( प्रयुक्ताः ) उपासना में उपयुक्त ओङ्कार की ( तिस्रः )

तीन (मात्राः) मात्रा हैं उन (बाह्याभ्यन्तरमध्यमासु) जाग्रत् अव-स्था में बाहरी स्वप्न में मध्यम और सुषुप्ति में भीतरी योगा-भ्यास सम्बन्धिनी ( क्रियासु ) उक्त तीनों क्रियाओं में ( स-म्यक् अच्छे प्रकार ( प्रयुक्तासु ) उपयुक्त मात्राओं में योगा-भ्यास के समय में अवस्थित ( ज्ञः ) ज्ञानयोग में तत्पर योगी ( न,कम्पते ) कर्त्तव्य से चलायमान नहीं होता ॥

भा०— ओङ्कार की तीनों मात्रा परस्पर जैसे मिली हैं वैसे ही शब्द अर्थ और ज्ञान के उक्त प्रकार इतरेतराभ्यास के साथ ओम्, इस नाम से युक्त, सम्प्रज्ञात असम्प्रज्ञात समाधि परक जाग्रत् स्वप्न और सुषुप्ति दशा में योगी पुरुष मन को योगा-भ्यास से युक्त करता है। तब समाधि से होने वाले फल से नहीं विचलता किन्तु उस को अवश्य प्राप्त होता है ॥ ६ ॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्त-त्कवयो वेदयन्ते। तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति॥७॥

ऋग्भिः। एतम्। यजुर्भिः। अन्तरिक्षम्। सः। सामभिः। यत्। तत्। कवयः। वेदयन्ते। तम्। ओङ्कारेण। एव। आयतनेन। अन्वेति। विद्वान्। यत्। तत्। शान्तम्। अजरम्। अमृतम्। अभयम्। परम्। च। इति॥ ७॥

अ०—( सः ) योगी ( विद्वान् ) (ऋग्भिः ) ऋग्वेदाभिप्रायरूपाभिर्वाग्जन्यस्तुतिभिः ( एत-तम् ) प्रत्यक्षं मनुष्यलोकम् ( यजुर्भिः ) यजु-र्वेदाभिप्रायरूपैर्मानसकर्मभिः ( अन्तरिक्षम् ) चन्द्रादिलोकम् ( सामभिः ) सामवेदाभिप्राय-रूपैः प्राणायामादिज्ञानवर्द्धकप्राणसाध्यकर्मभिः ( यत् ) ( कवयः ) पण्डिता एव ( वेदयन्ते )

जानन्ति ( तत् ) ब्रह्मलोकमनिर्देश्यं परोक्षम् ( तम् ) लोकत्रयम् ( ओङ्कारेण, एव, आयतनेन ) साधनेन ( अन्वेति ) प्राप्नोति लोकत्रयाधिष्ठात्रपरं ब्रह्म वक्ष्यमाणं परं च प्रणवप्रतीकोपासनयैवप्राप्यम् ( यत्, तत्, ) अतीन्द्रियत्वाददसङ्केत्यम् ( शान्तम् ) निर्विकल्पमवस्थाभेदशून्यमतएव ( अजरम् ) जराऽवस्थाविरहम् ( अमृतम् ) मृत्युरहितमतएव ( अभयम् ) निर्भयम् ( च ) ( परम् ) नास्ति किमपि वस्तु परं प्रकृष्टं यस्मात तन्निरतिशयं परं ब्रह्मानिर्गुणम् ( इति ) प्रश्नसमाप्तसूचनार्थः ॥

भा०—उत्तममध्यमनिकृष्टत्रिविधोपासनैस्तादृशमेव त्रिविधफलमुपासकोऽवाप्नोति । सर्वोत्तमोपासनया योगाभ्यासेन च जरामृत्युभयादिजन्यविकारशून्यं सर्वस्मात्सूक्ष्मं नित्यमुक्तं परं ब्रह्म योगिभिः प्राप्यते ॥७॥

भाषार्थः—( सः ) वह योगी ( विद्वान् ) विद्यावान् ज्ञानी ( ऋग्भिः ) ऋग्वेद के अभिप्राय रूप वाणी से हुई स्तुतियों से ( एनम् ) इस प्रत्यक्ष मनुष्य लोक को ( यजुर्भिः ) यजुर्वेद के अभिप्राय रूप मानस कर्मों से ( अन्तरिक्षम् ) चन्द्रमा आदि लोक को ( सामभिः ) सामवेद के अभिप्राय रूप प्राणायामादि ज्ञान सम्बन्धी कर्मों से ( यत् ) जिस को ( कवयः ) पण्डित विद्वान् लोग ही ( वेदयन्ते ) जानते हैं ( तत् ) उस परोक्ष निर्देश न करने योग्य ब्रह्मलोक अर्थात् ( तम् ) उस

तीनों लोक को (ओङ्कारेण, एव, आयतनेन) ओङ्कार रूप शब्द वाच्य अर्थ की उपासना रूप साधन से ही (अन्वेति) प्राप्त होता है तीनों लोकों के अधिष्ठाता अपरब्रह्म और आगे कहे पर ब्रह्म को प्रणव रूप प्रतीक की उपासना से ही प्राप्त हो सकता है (यत्, तत्) जिस में इन्द्रियों की गति न होने से संकेत नहीं हो सकता (शान्तम्) शान्त स्वरूप जिस में किसी प्रकार का विकल्प नहीं अर्थात् अवस्था भेद नहीं इसी लिये (अजरम्) वृद्धावस्था रहित (अमृतम्) मृत्यु रहित है इसी से (अभयम्) निर्भय है (च) और (परम्) जिस से सूक्ष्म वा उत्तम परे कोई नहीं वही निर्गुण परब्रह्म है (इति) यह प्रश्न समाप्त हुआ ॥

भा—उत्तम मध्यम और निकृष्ट तीन प्रकार की उपासना से वैसे ही तीन प्रकार के फल को उपासक पाता है। सर्वोत्तम उपासना और योगाभ्यास से जीर्ण अवस्था मृत्यु और भय आदि से होने वाले विकारों से रहित सब से सूक्ष्म नित्य मुक्त परब्रह्म को योगी जन प्राप्त होते हैं ॥ ७ ॥

इति पञ्चमः प्रश्नः समाप्तः ।

**अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ ? तमहं कुमारमब्रुवं नाहमिमं वेद । यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज तं त्वा पृच्छामि क्वासौ पुरुष इति॥१॥**

अथ । ह । एनम् । सुकेशा । भारद्वाजः । पप्रच्छ । भगवन् । हिरण्यनाभः । कौसल्यः । राजपुत्रः । माम् । उपेति ।

एनम् । प्रश्नम् । अपृच्छत । षोडशकलम् । भारद्वाज । पुरुषम् । वेत्थ । तम् । अहम् । कुमारम् । अब्रुवम् । न । अहम् । इमम् । वेद । यदि । अहम् । इमम् । अवेदिषम् । कथम् । ते । नाव-क्ष्यम् । इति । समूलः । वै । एषः । परिशुष्यति । यः । अनृत-म् । अभिवदति । तस्मात् । न । अर्हामि । अनृतम् । वक्तुम् । सः । तूष्णीम् । रथम् । आरुह्य । प्रवव्राज । तम् । त्वा । पृ-च्छामि । क्व । असौ । पुरुषः । इति ॥ १ ॥

अ०-( अथ ( शैव्यकृतप्रश्नस्योत्तरश्रवणानन्तरं ( सुकेशा ) नामकः ( भारद्वाजः ) भरद्वाजस्यापत्यम् ( एनम् ) पिप्पलादमृषिम् ( ह ) स्फुटमिदम् ( पप्रच्छ ) हे भगवन् ! (कौसल्यः) कोसलानां राजा ( राजपुत्रः, हिरण्यनाभः ) एतन्नाम को ( मामुपेत्यैतम् ) वक्ष्यमाणं ( प्रश्नमपृच्छत ) । हे ( भारद्वाज ! ) त्वं ( षोडशकलम् ) षोडश कला अस्मिन्नस्य वा स्वामिनः सन्ति तम् ( पुरुषम् ) पूर्णं व्याप्तं परमात्मनं ( वेत्थ ) जानासि ? ( तम् ) कुमारमहमेतदब्रुवम् ( नाहमिमम्, पुरुषं, वेद ) जानामीति । ( यद्यहमिमम् ) त्वया पृच्छ्यमानमात्मानम् ( अवेदिषम् ) तर्हि पूर्णशिष्यगुणवते ( ते ) तुभ्यं ( कथम् ) नावक्ष्यमपित्ववश्यमेव वदेयम् । ( यः ) पुरुषो जानन्नपि ( अनृतमभिवदति ) ( सः, एषः ) ( वै ) निश्चयेन समूलः ( परिशुष्यति ) तस्मात् ( अहमनृतम् ) शा-

स्वविरुद्धं वक्तुम् (नार्हामि) न योग्यो भवामि। (इत्येवं) प्रकारेण मद्वचः श्रुत्वा स राजपुत्रस्तूष्णीम् (रथमारुह्य प्रवव्राज) मत्समीपात्स्वस्थानं गतवान्। सोऽहम् (तम्, पुरुषम्, त्वा, पृच्छामि) क्वासौ अस्तीति॥

भा०—सुकेशा वदति यद्यहमेव न जानामि तर्हि कथमन्यस्मा उपदिशेयमिति यथार्थेन यत्स्वयं न जानीयान्न तदन्यस्मा उपदिशेत्। अनृतवादी समूलो विनश्यति। अस्मिन्नन्तिमप्रश्ने विशेषेण ब्रह्मणः स्वरूपमेव निरूप्यते सुषुप्तौ प्रलये च विज्ञानात्मा परस्मिन्नक्षरे सम्प्रतिष्ठते ततएव चोत्पद्यत इत्युक्तं पूर्वम्। नह्यनुपादाने कार्यसंप्रतिष्ठानमुपपन्नं, अस्य जगतो मूलपरिज्ञानादेव परं श्रेय इति सर्वोपनिषदां हार्दम् तदेव जगन्मूलं षष्ठप्रश्ने व्याख्यायते॥१॥

भाषार्थः—(अथ) अब शैव्य ऋषिकृत प्रश्न का उत्तर सुनने पश्चात् (सुकेशा) सुकेशा नामक (भारद्वाजः) भरद्वाज के पुत्र ने (एनम्) इन पिप्पलाद ऋषि से (ह) प्रकट (पप्रच्छ) पूछा कि हे (भगवन्!) गुरो! एक समय (हिरण्यनाभः) हिरण्यनाभनामक (कौसल्यः) कोसल देश के (राजपुत्रः) राजकुमारने (माम्) (उपेत्य) मेरे पास आकर (एतम्, प्रश्नम्) इस प्रश्न को (अपृच्छत) पूछा कि हे (भारद्वाज!) भारद्वाज तुम (षोडशकलम्) जिस सर्वाध्यक्ष परमात्माकी सोलह कला हैं वा जिस जीवात्मा के साथ सोलह कला रहती हैं उस (पुरुषम्) पूर्णव्याप्त परमेश्वर वा

जीवात्मा को ( वेत्थ ) जानते हो ? ( तम्, कुमारम् ) उस राजपुत्र से ( अहम् ) मैंने ( एतत् ) यह ( अब्रुवम् ) कहा कि ( नाहमिमं, वेद ) मैं इस पुरुष को नहीं जानता ( यद्यहमिममवेदिषम् ) यदि मैं तुम्हारे पूछे इस आत्मा को जानता होता तो पूर्ण शिष्य के गुणों वाले ( ते ) योग्यता के पात्र तुम्हारे लिये ( कथम् ) क्यों ( न, अवक्ष्यम् ) न कहता किन्तु अवश्य तुम को उपदेश करता क्योंकि मैं मानता हूं कि ( एषः ) वह पुरुष ( वै ) निश्चय कर ( समूलः ) धन पुत्रादि सहित ( परिशुष्यति ) सूखना—नष्ट हो जाता है (यः) जो ( अनृतम् ) शास्त्र से विरुद्ध जानकर झूठ (अभिवदति) बोलता है ( तस्मात्, नार्हामि, अनृतं, वक्तुम् ) इसलिये मैं झूठ नहीं बोल सकता अर्थात् मैं कदापि झूठ न बोलूंगा ( इति ) ऐसा मेरा कथन सुनकर ( सः ) वह राजपुत्र ( तूष्णीम् ) चुपचाप ( रथमारुह्य ) रथपर चढ़ कर ( प्रवव्राज ) मेरे समीप से अपने स्थान को चला गया। इस लिये ( तम् ) उस आत्मा को ( त्वा ) आप से ( पृच्छामि ) पूछता हूं कि ( असौ ) वह ( पुरुषः ) आत्मा ( क्व ) कहां है ( इति ) ऐसा आप कहिये ॥

भा०—सुकेशा ऋषि कहते हैं कि जब मैं ही नहीं जानता तो अन्य के लिये कैसे उपदेश करूं। शास्त्रकारों की आज्ञा है कि जिस बात को यथार्थरूप से आप न जाने उस को अन्य के लिये भी उपदेश न करे। मिथ्यावादी निर्मूल नष्ट होजाता है। इस अन्तिम प्रश्न में विशेष कर ब्रह्म के स्वरूप का ही निरूपण किया जाता है सुषुप्ति और प्रलय के समय विश्वात्मा अविनाशी निर्गुण परमात्मा में ठहर जाता और उसी से फिर २ प्रकट होता ऐसा आशय पूर्व कह चुके हैं। सो उपादान से भिन्न कारण में कार्य्य का ठहर सकना युक्ति विरुद्ध है।

वैसा हो तो पृथिवी के विकार आकाश में ठहर सके । इस जगत् के मूल उपादान को जानने से ही परम कल्याण है यह उपनिषदों का परम सिद्धान्त है । सो अब छठे प्रश्न में जगत् के मूल का ही व्याख्यान करते हैं ॥ १ ॥

तस्मै स होवाच इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥२॥

तस्मै । सः । ह । उवाच । इह । एव । अन्तःशरीरे । सोम्य । सः । पुरुषः । यस्मिन् । एताः । षोडशकलाः । प्रभवन्ति । इति ॥ २ ॥

अ०—हे ( सोम्य ! ) शान्त्यादिगुणयुक्त ( इहैवान्तःशरीरे ) हृदयपुण्डरीकाकाशमध्ये ( सः,पुरुषः ) जीवाभिधः परमात्मा योगिभिर्ध्यानेन प्राप्यते ज्ञायते च ( यस्मिन्नेताः ) वक्ष्यमाणाः प्राणाद्याः ( षोडशकलाः ) भागाः ( प्रभवन्ति ) उत्पद्यन्ते । स इत्येवं पिप्पलादस्तस्मै भारद्वाजाय ( ह ) प्राकट्येनोवाच ॥

भ०—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" ॥ इति भगवद्गीतासु प्रतिपादनादीश्वरः स्वकलाभिः सर्वान् जन्तून् भ्रामयन् हृदि तिष्ठति । यद्यपि सर्वत्र चराचर एकरसतया परमात्मा व्याप्तस्तथापि दर्पणे प्रतिबिम्बमिव शुद्धान्तःकरणे ज्ञानिभिरेवोपलभ्यत इति मत्वाऽन्तःशरीर एव स्थितिर्दर्शिता । ज्ञानरूपं साधनं च

शरीर एवास्ति षोडशकलात्मकः सर्वः प्रपञ्चो हृद्यत्रस्थितात्परमात्मोपादानादेव हिरण्यकुण्डलन्यायेन प्रभवति कुण्डलादिनामरूपैरपि हिरण्यबोधवद्देव सर्वानर्थहानाय सएव षोडशकलो भगवानन्वेष्यः ॥ २ ॥

भाषार्थः—हे ( सोम्य ! ) शान्ति आदि गुणयुक्त सुकेशा ( इहैव, अन्तःशरीरे ) यहीं शरीर के भीतर हृदय कमलरूप आकाश के बीच ( सः, पुरुषः ) वह जीवात्मा नामक पूर्ण व्याप्त परमात्मा योगी लोगों से योगाभ्यास ध्यानादि करके प्राप्त किया वा जाना जाता है ( यस्मिन्, एताः ) जिस में ये ये आगे कहीं ( षोडश ) सोलह ( कलाः ) कार्य जगत् के अंश ( प्रभवन्ति ) उत्पन्न होते हैं ( इति ) इस प्रकार ( तस्मै ) उन सुकेशा से ( सः ) वे पिप्पलाद ( उवाच, ह ) बोले ॥

भा०—भगवद्गीता में लिखा है कि सब प्राणियों को कल में बैठाकर जैसे कोई घुमावे वैसे कार्यजगत् शरीरादि के साथ उन के हृदय में स्थित हुआ परमेश्वर घुमा रहा है अर्थात् कर्म फल भुगाता है। यद्यपि परमात्मा सब चराचर जगत् में एकरस व्याप्त है तो भी दर्पण में छाया के तुल्य शुद्ध अन्तःकरण में ज्ञानी लोगों को ही प्राप्त होता है। ऐसा मान कर हृदय में स्थिति दिखाई गयी है और ज्ञानरूप साधन भी शरीर में ही रहता है देव मनुष्यादि सब चराचर संसार षोडशकला रूप है, वह हृदय में विद्यमान परमात्मारूप उपादान से ही सुवर्ण से कुण्डलादि बनने के तुल्य बन जाताहै जैसे कुंण्डलादि नाम रूपों से असली सुवर्ण का ही बोध किया जाता है वैसे ही सब अनर्थों से बचने के लिये जगत् रूप सोलह कलाओं में भी भगवान् को खोजना चाहिये ॥२॥

स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ३॥

सः । ईक्षाञ्चक्रे । कस्मिन् । अहम् । उत्क्रान्ते । उत्क्रान्तः भविष्यामि । कस्मिन् । वा । प्रतिष्ठिते । प्रतिष्ठास्यामि । इति ॥ ३ ॥

अ०—( सः ) षोडशकलः पुरुषः सर्गारम्भे ( ईक्षाञ्चक्रे ) आलोचितवान् ( अहम्, कस्मिन्नुत्क्रान्ते ) निर्गतेऽस्मात्कलेवरात् ( उत्क्रान्तः ) निस्सृतः ( भविष्यामि ) ( वा ) अथवा ( कस्मिन् ) ( प्रतिष्ठिते, प्रतिष्ठास्यामि, इति ) एवमचिन्तयत् ॥

भा०—यद्यपि नित्यचैतन्योत्क्रमणं प्रतिष्ठानं च न संभवति तथापि चिदाभासात्मकः। प्रतिबिम्बरूपो जीवो बिम्बादभिन्नत्वाद् बिम्बरूपएवेति मत्वेदमुच्यते । बिम्बे परमात्मन्यचलेऽप्यन्तःकरणोपाधिकः प्रतिबिम्बे जीवश्चलति देहाद्देहान्तरं लोकाल्लोकान्तरं प्राणे मुख्य उत्क्रान्ते गच्छति प्रतिष्ठिते च मुख्ये प्राणे प्रतिष्ठति तस्मादीक्षणं कृत्वा पूर्वं मुख्यं प्राणमसृजत

भाषार्थः—( सः ) उस षोडशकला वाले पुरुष ने सृष्टि के आरम्भ में ( ईक्षाञ्चक्रे ) चिन्तन किया कि ( अहम् ) मैं ( कस्मिन् ) किस के ( उत्क्रान्ते ) निकलने पर इस शरीर से ( उत्क्रान्तः, भविष्यामि ) निकल जाऊंगा ( वा ) अथवा ( कस्मिन् ) किस के ( प्रतिष्ठिते ) प्रतिष्ठित होने से ( प्रतिष्ठा-

स्यामि ) प्रतिष्ठित होऊंगा ( इति ) इस प्रकार विचार उपस्थित हुआ ॥

भा०-यद्यपि नित्य चैतन्य अलख व्यापक परमात्माका शरीर से निकलना वा शरीर में ठहरना नहीं बनता तथापि चिदाभासात्मक प्रतिबिम्ब रूप जीव बिम्ब से भिन्न न होने के कारण बिम्बस्वरूप ही है ऐसा मानकर यह कहते हैं कि उस ने सोचा कि किस के निकलने पर मैं निकल जाऊंगा और किस के ठहरने से ठहरूंगा। बिम्बरूप परमात्मा के अचल होने पर भी अन्तःकरणोपाधि वाला प्रतिबिम्ब जीव शरीर से अन्य शरीर में वा एक लोक से अन्यलोक में प्राणके निकलने पर जाता और प्राण के ठहरने पर ठहर जाता है। ऐसा सोच कर उत्पत्ति प्रलय के मुख्य हेतु प्राण को प्रथम बनाया। जैसे सूर्य मण्डल वा चन्द्रमा मण्डल का प्रतिबिम्ब किसी दर्पणादि में पड़ा तो उन दर्पणादि के चलने से प्रतिबिम्ब भी चलता है परन्तु चन्द्रमण्डल नहीं चलता तो भी चन्द्रमा से भिन्न प्रतिबिम्ब कुछ नहीं इस से दर्पणस्थ चन्द्रमा चलता है ऐसा व्यवहार हो सकता है। वैसा ही यहां भी जानो ॥

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम्। मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च ॥ ४ ॥**

सः। प्राणम्। असृजत। प्राणात्। श्रद्धाम्। खम्। वायुः। ज्योतिः। आपः। पृथिवी। इन्द्रियम्। मनः। अन्नम्। अन्नात्। वीर्यम्। तपः। मन्त्राः। कर्म। लोकाः। लोकेषु। च। नाम। च ॥

अ०-( सः ) पुरुषः सर्गारम्भे सर्वकलासु प्रधानं सर्वासां कारणभूतम् (प्राणम्) सर्वप्राणं

हिरण्यगर्भम् सर्वप्राणसमष्टिरूपं जीवनहेतुं प्रथमम् ( असृजत ) ( प्राणात् ) कारणभूतात् ( श्रद्धाम् ) सर्वप्राणिनां शुभकर्मसु प्रवृत्तेर्हेतुभूताम्। तदनन्तरं कर्मफलभोगसाधनानि पञ्च महाभूतानि ( खम् ) आकाशम् (वायुर्ज्योतिः) अग्निवायू ( आपः, पृथिवी ) इति क्रमेणैकद्वित्रिचतुःपञ्चगुणानि शब्दस्पर्शरूपरसगन्धवन्ति पञ्चभूतान्यसृजत तेभ्यश्च भौतिकं श्रोत्रादि ( इन्द्रियम् ) पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाण्येवं दश। जातावेकवचनम्। ततः (मनः ) इन्द्रियाणां राजा सतीषु प्रजासु राज्ञः सम्भवात्। ततस्तेषां रक्षकम् ( अन्नमन्नात् ) प्राणस्थितिहेतुकं व्रीहियवादिकमन्नमन्नादुपादानात् ( वीर्यम् ) सामर्थ्यं बलं सति वीर्ये पराक्रमे ( तपः ) चित्तशुद्धिसाधनरूपं तपः सम्भवति शुद्धचित्तैः प्रयोज्याः (मन्त्राः ) ऋग्यजुःसामाथर्वरूपाः कर्मसाधना मन्त्राः सृष्टास्ततः ( कर्म ) अग्निहोत्रादिरूपम्। ततो ( लोकाः ) कर्मफलभूताः स्वर्गादयो लोकास्तेषु प्राणिविग्रहाश्च नानाविधाः सृष्टाः ( च, लोकेषु ) तेषु सृष्टप्राण्यादीनाम् ( नाम च ) व्यवहारसिध्यर्थं देवदत्तादि सञ्ज्ञापि क्रियते। यथा सतो मांसपिण्डस्य देवदत्त इति सञ्ज्ञा क्रियते नासतः॥

भा०—कलानामीश्वरनिर्मितत्वहेतुना सत्यत्वसन्देहश्चेन्नाङ्गुल्यवष्टम्भनेत्रमर्दनादिप्रयत्नेन द्विचन्द्रादिसृष्टिवत्प्राण्यविद्यादिदोषबीजापेक्षया कलाः स्वप्नसृष्टाः ॥

भाषार्थः—( सः ) सृष्टि के आरम्भ में उस परमेश्वर ने सब कलाओं में मुख्य सब के कारण भूत ( प्राणम् ) सब के प्राण नाम सब प्राणों के संघट्टरूप ब्रह्मा जी रूप प्राण को प्रथम ( असृजत ) रचा ( प्राणात ) कारणरूप प्राण से ( श्रद्धाम् ) सब प्राणियों की शुभ कर्म में प्रवृत्तिरूप श्रद्धा को प्रकट किया तदनन्तर कर्मफल भोग के साधन पांच महाभूत ( खम् ) आकाश ( वायुः ) वायु ( ज्योतिः ) अग्नि ( आपः ) जल ( पृथिवी ) पृथिवी ये पांचभूत आकाश एक शब्द गुण वाला, वायु शब्द स्पर्श वाला, अग्नि शब्द स्पर्शरूप वाला, जल शब्द स्पर्शरूप रस वाला और पृथिवी गन्ध सहित पांचो गुण वाली रची और उन भूतों से ( इन्द्रियम् ) कान आदि भौतिक इन्द्रियां पांच ज्ञानेन्द्रिय पांच कर्मेन्द्रिय ऐसे दश इन्द्रिय बनाये तिस पीछे ( मनः ) इन्द्रियों का राजा मन बनाया क्योंकि पहिले प्रजा हो तब ही उस का राजा उन्हीं में से हो सकता है फिर इन्द्रिय और मन की रक्षा के लिये प्राणियों की स्थिति का हेतु व्रीहि जौ आदि ( अन्नम् ) अन्न बनाया ( अन्नात् ) उस उपादान अन्न से ( वीर्यम् ) बल वा सामर्थ्य रूप वीर्य हुआ बल होने से तप हो सकता और वीर्य की रक्षा के लिये तप करना चाहिये इस कारण वीर्य के पीछे ( तपः ) चित्तशुद्धि साधन रूप तप बनाया पीछे तप के उपयोगी शुद्धचित्त वालों को बोलने जपने योग्य ( मन्त्राः ) ऋग्यजुः सामाथर्व रूप कर्म के साधन वेदमन्त्र बनाये पीछे ( कर्म ) अग्नि होत्रादि कर्म को बनाया

तदनन्तर ( लोकाः ) कर्म फल भोग के स्थान स्वर्गादि लोक और उन में अनेक प्रकार के प्राणियों के शरीर बनाये ( च ) तथा ( लोकेषु ) उन लोकों में रचे प्राणियों के ( नाम, च ) देवदत्तादि संज्ञा भी बनायी क्योंकि विद्यमान मांसपिण्ड की देवदत्त इत्यादि संज्ञा की जा सकती है अविद्यमान की नहीं॥

भा०—प्राण, श्रद्धा, आकाश, वायु, अग्नि, जल, पृथिवी, इन्द्रियां, मन अन्न, वीर्य, तप, मन्त्र, कर्म, लोक, नाम, इन सोलह कलाओं के ईश्वर से प्रकट होने से इन के सत्य होने का सन्देह हो तो जैसे आंखों के मलने आदि से दो चन्द्रमा हो गये जान पड़ते हैं वैसे ही प्राणियों की अविद्या काम कर्मादि दोष रूप बीज से हुई स्वप्न की सृष्टि के तुल्य इन सब कलाओं की रचना है वास्तविक नहीं। प्राण पद से सब प्राणों का समष्टिरूप हिरण्यगर्भ लेने से उसी के अन्तर्गत सब प्राणों की सृष्टि का विचार आ जाता है ॥ ४ ॥

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥**

सः । यथा । इमाः । नद्यः । स्यन्दमानाः समुद्रायणाः । समुद्रम् । प्राप्य । अस्तम् । गच्छन्ति । भिद्येते । तासाम् । नामरूपे । समुद्रः । इति । एवम् । प्रोच्यते । एवमेव । अस्य । परिद्रष्टुः । इमाः । षोडशकलाः । पुरुषायणाः । पुरुषम् । प्राप्य । अस्तम् । गच्छन्ति । भिद्येते । तासाम् । नामरूपे । पुरुषः ।

इति । एवम् । प्रोच्यते । सः । एषः । अकलः । अमृतः । भवति । तत् । एषः । श्लोकः ॥ ५ ॥

अन्वयः—कलानामुत्पत्तिनाशौ परमात्मसकाशादेव जायेते इत्यत्र (सः) प्रसिद्धो दृष्टान्त उच्यते (यथा) (स्यन्दमानाः) (इमाः) प्रत्यक्षा दृश्यमानाः (समुद्रायणाः) समुद्रोऽयनं स्थित्यधिकरणं गतिरात्मभाव आसां ताः (नद्यः) (समुद्रम्) (प्राप्य अस्तम्) अदृश्यभावम् (गच्छन्ति) तदा च (तासाम् नामरूपे) (भिद्येते) इयं गङ्गेयं यमुनेत्यादिनामानि। इयमीदृशीत्यादि रूपाणि च तत्रैव नश्यन्ति समाप्यन्ते किन्तु (समुद्रः इत्येवम् प्रोच्यते) (एवमेवास्य परिद्रष्टुः) परितः सर्वतो दर्शकस्य ज्ञातुः सर्वज्ञस्य स्वामिनः (इमाः) (षोडशकलाः। पुरुषायणाः) पुरुषः परमात्मैवायनं स्थित्यधिकरणमात्मभावगमनमासामिति ताः (पुरुषम्, प्राप्य) प्रलयावसरे पुरुषात्मभावमुपगम्य (अस्तम्) (गच्छन्ति) अदृश्या भवन्ति (तासाम् नामरूपे) प्राणाद्याख्या चतुर्मुखादिरूपंच तदा (भिद्येते) नामरूपादिनाशे यदनष्टस्वरूपं सः (पुरुषः इत्येवम् प्रोच्यते) ब्रह्मतत्त्वज्ञैः (सः, एषः) एवं विद्यया विनाशितप्राणादिकलस्तत्त्वस्य विज्ञाता जनः (अकलः) प्राण शरीरादि कलारहितोऽतएव (अमृतः)

मुक्तः ( भवति ) ( तदेषः ) ( श्लोकः ) तस्य विषयस्य प्रतिपादको वक्ष्यमाणो मन्त्रोऽस्ति॥

भा०—यस्मिन् परमात्मनि सर्वमिदं प्रत्यक्षीभूतं कार्यं जगन्नद्यः समुद्रइव नामरूपविरहं सत्प्रलीयते तं यस्तत्त्वतो जानाति स दुःखान्मुच्यते । नदीसमुद्रादीनां देशनामरूपादि भेदमात्रेण यो भेदः सैव सृष्टिः नामरूपोभाव एव प्रलयो नाम रूपे च कल्पिते वस्तुतो नस्तस्तथैव परमात्मनि नामरूपमात्रकल्पनैव सृष्टिरिति सूक्ष्मदर्शिन एकमेवाविष्कृतमात्मतत्त्वं पश्यन्तीदमेव ज्ञानं सर्वदुःखनाशकमिति॥५॥

भाषार्थः—कलाओं की उत्पत्ति और विनाश परमात्मा से ही होते हैं इस विषय में ( सः ) यह प्रसिद्ध दृष्टान्त कहा जाता है ( यथा ) जैसे ( स्यन्दमानाः ) चलती हुई ( इमाः ) ये गङ्गादि ( नद्यः ) नदियां ( समुद्रायणाः ) समुद्र ही जिन का आधारगति वा वास्तविकस्वरूप है (समुद्रम् ) समुद्र को ( प्राप्य ) प्राप्त होकर ( अस्तम् ) अस्त अदृश्यभाव को ( गच्छन्ति ) प्राप्त हो जाती हैं ( तासाम् ) तब उन के ( नाम रूप ) गङ्गा यमुनादि नाम और श्वेत काला आदि रूप ( भिद्येते ) मिट जाते हैं किन्तु ( समुद्रः, इत्येवम्, प्रोच्यते) समुद्र है यहां कहा जाता है । यद्यपि गङ्गा यमुनादि के जल परमाणुओं का समुद्र में भी अभाव नहीं होता वे स्वरूप से अवश्य भिन्न बने रहते हैं तो भी अदृश्य होने से नाम रूप का भिन्न व्यवहार नहीं हो सकता और न स्थूल इन्द्रियों से नाम रूप भिन्न २ दीख सकते हैं ( एवमेव ) इसी प्रकार ( अस्य ) इस ( परिद्रष्टुः ) सब ओर को ज्ञान रखने वाले सर्वज्ञ सब के स्वामी परमेश्वर की ( इमाः ) ये (पुरुषायणाः)

उत्पत्ति स्थिति प्रलय तीन दशा में पूर्ण व्याप्त ब्रह्म ही जिन का वास्तविक स्वरूप नाम आधार है ऐसी (षोडश) पूर्वोक्त सोलह ( कलाः ) कला ( पुरुषम् ) परमेश्वर को ( प्राप्य ) प्राप्त होकर नाम पर का साक्षात् रूप बन कर ( अस्तम् ) अपने रूप से अस्त अदृश्य ( गच्छन्ति ) हो जाती हैं तब ( तासाम् ) उन के ( नामरूपे ) पृथिवी घट पटादि नाम और रक्त कृष्णादि रूप ( भिद्येते ) मिट जाते हैं नाम रूपों का नाश हो जाने पर जो अविनाशी रूप है वही ( पुरुषः,इत्येवम्, प्रोच्यते ) पुरुष नाम परमेश्वर है ऐसा ब्रह्म के तत्त्वज्ञानी कहते हैं । ( सः, एषः ) इस प्रकार तत्त्वज्ञान हो जाने से प्राणादि कलाओं की कामना जिस की नष्ट हो गयी ऐसा आत्मज्ञानी पुरुष ( अकलः ) प्राण शरीर आदि कलासे रहित इसी कारण ( अमृतः ) मुक्त ( भवति ) होता है ( तदेषः, श्लोकः ) इस उक्त विषय का प्रतिपादन करने वाला अगला मंत्र है ॥

भा०—जिस परमात्मा में यह सब कार्यरूप प्रत्यक्ष जगत् [ जैसे समुद्र में नदियां वैसे ] नाम रूप रहित हुआ लय हो जाता है उस ब्रह्म को जो तत्त्वरूप से जानता है वह दुःख से छूट जाता है । नदी और समुद्रादि का देश भेद नाम भेद और रूपादि भेद मात्र से जो भेद है वही सृष्टि रचना है। नाम रूपों का अभाव ही प्रलय है । मूल में पट के तुल्य नाम रूप कल्पित हैं वस्तुतः कुछ नहीं हैं । वैसे परमात्मा में नाम रूप मात्र प्राणादि की कल्पना ही सृष्टि है, ऐसे विचार से सूक्ष्मदर्शी ज्ञानी लोग एक अविनाशी राम को ही सब में देखते हैं यही ज्ञान सब दुःखों का नाशक है ॥ ५ ॥

अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः।
तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

अराःऽइव । रथनाभौ । कलाः । यस्मिन् । प्रतिष्ठिताः । तम् । वेद्यम् । पुरुषम् । वेद । यथा । मा । वः । मृत्युः । परिव्यथाः । इति ॥ ६ ॥

अ०—हे ऋषयः ! सर्वसाधारणा जिज्ञासवो जना वा ( रथनाभावराइव ) ( यस्मिन् ) ब्रह्मणि पूर्वोक्ताः षोडश ( कलाः ) ( प्रतिष्ठिताः ) आश्रिता यदाधाराः सन्ति ( तम् ) कुण्डलस्य हिरण्यमिव कलानामात्मभूतम् (वेद्यम्) ज्ञातुं योग्यम् ( पुरुषम् ) पूर्णं परेशं जिज्ञासुः ( वेद ) जानीयात् । इदानीं पिप्पलाद आशीर्ददाति हे शिष्याः ! ( यथा ) येन ज्ञानप्रकारेण हेतुना ( वः ) युष्मान् ( मृत्युर्मा )(परिव्यथाः) न व्यथयेत् (इति)। अत्र पुरुषव्यत्ययः॥

भा०—यथा जले तरङ्गा नामरूपभेदेऽपि जलात्मनैवावस्थितास्तरङ्गानां कल्पितत्वादसत्वे स्वरूपेणावस्थितेरसंभवएव । तथैव कल्पितकलानां स्वरूपेणासत्वात्स्वोपादानपुरुषरूपेणैव सर्गेऽप्यवस्थितिर्युक्ता मरणादिदुःखानि कलाश्रितानि कलानामसत्वज्ञाने मृत्योरप्यसत्वमेव सिद्धम् । यथा नाभ्याश्रयेणारास्तिष्ठन्ति नहीतस्ततो विचलन्ति तथैव पृथिव्यादयः सर्वे लोकाः परमात्माश्रयेणैव स्वस्वकक्षायां स्थितास्तेनैव धृतास्ततो न विचलन्ति । तदेवंभूतमात्मतत्त्वं यो विजानाति तं मृत्युर्न व्यथयति ॥६॥

भावार्थः—हे ऋषिलोगो ! वा सर्व साधारण जिज्ञासु जनो ! जैसे ( रथनाभौ ) ( अराइव ) रथ के पहिये की पुट्ठी में आ-राधात्मक लकड़ी लगी होती हैं वैसे ( यस्मिन् ) जिस ब्रह्म में पूर्वोक्त सोलह ( कलाः ) कला ( प्रतिष्ठिताः ) स्थित वा आ-श्रित हैं ( तम् ) जैसे कुण्डलादि का अपना रूप सुवर्ण है वैसे कलाओं के अपने उपादान स्वरूप ( वेद्यम्. पुरुषम् ) उन जानने योग्य पूर्णव्याप्त परमेश्वर को जिज्ञासु पुरुष (वेद) जानते हैं। अब पिप्पलाद ऋषि आशीर्वाद देते हैं कि हे शिष्यो ( यथा ) जिस ज्ञान प्रकार रूप हेतु से ( वः ) तुम सब को ( मृत्युः ) मृत्यु ( मा, परिव्यथा, इति ) पीड़ित न करे ॥

भा०—जैसे नाम रूप भेद होने पर भी जलतरंग जल में जल रूप से ही विद्यमान हैं, अपने रूप से नहीं, तरङ्ग स्वयं कल्पित असत् होने से अपने रूप से उन की स्थिति असम्भव है। वैसे ही कल्पित कलाओं के स्वरूप से असत् होने पर अपने उपादान पुरुष रूप से ही सृष्टि होने पर भी स्थिति होना ठीक है। मृत्यु आदि के दुःख कलाओं के आधीन हैं तब कलाओं को असत् जान लेने पर मृत्यु का असत् होना भी सिद्ध है। जैसे नाभि के आश्रय से अरा ठहरते हैं किन्तु इधर उधर को विचलते नहीं वैसे ही पृथिव्यादि सब लोक परमात्मा के आश्रय से ही अपनी २ कक्षा में उसी ने धारण किये स्थित हैं जिस से चलायमान नहीं होते। उस परमात्मा को जो जानता है उस को मृत्यु पीड़ित नहीं करता ॥ ६ ॥

तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति ॥ ७ ॥

तान् । ह । उवाच । एतावत् । एव । अहम् । एतत् । परम् । ब्रह्म । वेद । न । अतः । परम् । अस्ति । इति ॥ ७ ॥

अ०—( तान् ) सुकेशादीन् शिष्यान् प्रति पिप्पलादो विषयमुपसंहरन् (ह, उवाच ) (अ-

-हम्, एतावत्, एव, एतत्परम् ) ( ब्रह्म ) (वेद) जानामि । अतः परमन्यः कश्चिज्जानीयादिति शङ्कानिरासायाह ( न ) (अतःपरमस्ति) ।अतः परमन्यद्ब्रह्मतत्त्वं नास्त्येव (इति) निश्चितम् ॥

भा०—पिप्पलादो महर्षिर्वदति—बहुना कथनेनैव बोधो न भवत्यपितु स्वल्पेन सारकथनेनैव भवादृशो ज्ञातुमर्हन्ति । यन्मया प्रतिपादितं तदेवाहं परंब्रह्म जानामि नातः परं कश्चिद्वक्तुमर्हति ॥ ७ ॥

भावार्थः—( तान् ) उन सुकेशादि शिष्य ऋषियों के प्रति विषय को समाप्त करते हुए पिप्पलाद ऋषि ( होवाच ) बोले कि ( अहम् ) मैं ( एतावदेव ) इतना ही ( एतत् ) इस ( परम्, ब्रह्म ) परब्रह्म को ( वेद ) जानता हूं यदि कोई शङ्का करे कि इस से परे अन्य कोई जानता होगा सो नहीं (अतःपरम्) इस से परे (न, अस्ति) अन्य ब्रह्मतत्त्व नहीं है ॥

भा०—पिप्पलाद महर्षि कहते हैं कि बहुत कहने वा उपदेश से बोध नहीं होता किन्तु साररूप थोड़े ही कथन से आप जैसे लोग जान सकते हैं जिस का मैंने प्रतिपादन किया है उसी परब्रह्म को मैं जानता हूं इससे परे कोई नहीं कह सकता ॥ ७ ॥

ते तमर्चयन्तस्त्वं हि नः पिता यो ऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

ते । तम् । अर्चयन्तः । त्वम् । हि । नः । पिता । यः । अस्माकम् । अविद्यायाः । परम् । पारम् । तारयसि । इति । नमः । परमऋषिभ्यः । नमः । परम ऋषिभ्यः ॥ ८ ॥

अ०-( ते ) सुकेशादय ऋषयः प्राप्तविद्योपकारस्यान्यं प्रत्युपकारमपश्यन्तः (तम्) पिप्पलादम् ( अर्चन्तः ) शिरसि पुष्पाञ्जलिदानेन शिरसा तत्पादयोः प्रणामादिना च पूजयन्तः । स्तुवन्ति । (त्वम्‌ हि नः) अस्माकम् ( पिता ) अविद्यादिक्लेशजन्यपीडातो रक्षकोऽसि ( यः ) त्वम् ( अस्माकम् ) ( अविद्यायाः ) सरितः ( परम्, पारम्‌ तारयसि ) नास्ति भवत्तारणे निमज्जनभयम् । इत्यादि प्रकारैः स्तुवन्ति स्म ( नमः परमऋषिभ्यः नमः परमऋषिभ्यः ) इत्येवं पिप्पलादय पुनःपुनर्नमस्कुर्वन्ति स्म । द्विर्वचनं प्रश्नसमाप्तिसूचकम् ॥

भा०-यः स्वोपकारं कुर्यात्तस्य प्रत्युकारः कार्य इत्येव कृतज्ञत्वम् । पिप्पलादेन च सुकेशादीनां सर्वदुःखान्निवृत्तिरूपो महानुपकारः कृतस्तस्य प्रत्युपकारमन्यमपश्यन्तः कृतज्ञत्वं सूचयन्ति । एवमेव गुरोर्विद्यामादाय सर्वैः कृतज्ञता कार्या प्रत्युपकारश्च पितृपदेन गुरोर्ब्रह्मात्मभावस्याजरामराभयात्मकशरीरस्य जनयितृत्वं सूच्यते यथा कोऽपि महता प्लवेन कमपि निमज्जन्तं महोदधेः पारं प्रापयेत्तथैवाविद्यात्मक विपरीतज्ञानजन्यजन्मजरामरणरोगदुःखादिसागरे मज्जनादविद्यासमुद्राद्विद्याप्लवेनापुनरा-

**वृत्तिलक्षणं मोक्षाख्यंपारं गुरुस्तारयति तस्माद् गुरुशुश्रूषणमेव मुख्यम् ॥ ८॥**

भाषार्थ-( ते ) वे सुकेशादि ऋषिजन विद्याप्राप्ति-ब्रह्मज्ञानरूप उपकार का अन्य प्रत्युपकार करने में अपना सामर्थ्य न देखते हुए ( तम् ) उन पिप्पलाद ऋषि को ( अर्चन्तः ) शिर पर पुष्प बर्षाते और पगों में शिर धरके प्रणाम आदि करने से पूजा करते हुए स्तुति करते हैं कि ( त्वम्, हि ) आप ही ( नः ) हमारे ( पिता ) अविद्यादि क्लेश अन्य पीड़ा से रक्षक हैं ( यः ) जो आप ( अस्माकम् ) हमारी ( अविद्यायाः ) अविद्यारूप नदी के ( परम्पराम् ) उत्तम प्रकार पार करने वाले हैं आप के तारने में, डूबने का भय नहीं है। इत्यादि प्रकार से स्तुति की ( नमः, परमऋषिभ्यः २ ) इस प्रकार पिप्पलाद से सब शिष्यों ने बार,२ नमस्कार किया। द्विवचन प्रश्न समाप्ति के अर्थ है॥

भा०-जो अपना उपकार करे उस का प्रत्युपकार करना चाहिये यही कृतज्ञता है पिप्पलाद ने सुकेशादि ऋषियों का सब दुःख से निवृत्तिरूप बड़ा उपकार किया उस का अन्य प्रत्युपकार न देखते हुए कृतज्ञता दिखाते हैं। इसी प्रकार गुरु से विद्या प्राप्त कर सब को कृतज्ञता और प्रत्युपकार करना चाहिये गुरु को पिता कहने का आशय यह है कि अजर अमर अभय ब्रह्मात्मभाव रूप शरीर का उत्पादक गुरु है। जैसे कोई किसी डूबते हुए को बड़ी नौका वा समुद्र के पार उतार के बचा दे वैसे ही अविद्या रूप विपरीत ज्ञान से होने वाले जरा जन्म मरण व्याधि विपत्ति दुःखादि रूप समुद्र में डूबते हुओं को तत्त्वज्ञान रूप नौका के द्वारा अज्ञान सागर से जिस से पुनरावृत्ति नहीं होती ऐसे मोक्षात्मक पार में गुरु पहुंचा देता है, इस से गुरु की सेवा शुश्रूषा करना मुख्य काम है ॥ ८ ॥

**इति भीमसेनशर्ममिश्रकृतभाष्यसंयुता प्रश्नोपनिषत् समाप्तिमगमत् ॥**

# धर्मसम्बन्धी पुस्तकों का सूचीपत्र ॥

ब्राह्मणसर्वस्व मासिकपत्र प्रतिभाग १।) एकत्र लेने पर ६ भाग का ७।।) वार्षिक मूल्य २।) अष्टादश स्मृति भा० टी० सहित ३) सतीधर्म संग्रह ।) श्रीमद्भगवद्गीता सभाष्य २।।) पतिव्रता माहात्म्य ≡) भर्तृहरि नीतिशतक भा० टी० ≡) वैराग्य शतक भा० टी० ≡) शृङ्गारशतक भा० टी० ≡) दर्शपौर्णमास पद्धति भा० टी० ।।) इष्टिसंग्रह पद्धति श्रौतविषय ।) स्मार्त्तकर्म पद्धति भा०टी० ।) त्रिकाल सन्ध्या )।। कातीय तर्पण सविधि -) भोजन विधि )।। यज्ञ परिभाषा सूत्र संग्रह संस्कृत भाषा टीका युक्त ।।) हरिस्तोत्र भा० टी० )। शिवस्तोत्र भा० टी० )। पञ्चमहायज्ञविधि भा० टी० =) मानवगृह्यसूत्र भाषाटीका ।।) आपस्तम्बगृह्यसूत्र भा० टी० ।) गर्भाधानादि नव संस्कारपद्धति भा० टी० ≡) उपनयनपद्धति भा० टी० ≡) सनातन हिन्दूधर्म व्याख्यान दर्पण ( स्वामी आलारामजी कृत) ५६ व्याख्यान युक्त मू० ३।।) आर्य्यमत निराकरण प्रश्नावली ।) विधवा विवाह निराकरण -) सत्यार्थ प्रकाश समीक्षा =) आर्य्यसमाज का आदम ।) मुक्तप्रकाश -) दयानन्द लीला )।। भजन पचासा -) दयानन्दमत खण्डन भजनावलि ।=) यजुर्वेद भाष्य समीक्षा -)।। दयानन्द हृदय )। दयानन्द मत दर्पण -) दयानन्द परास्त नाटक ≡) धर्मसन्ताप )। विदेशी चीनी से हानि )।। धर्मरक्षा और भारत विनय )। वन्देमातरम् )। अष्टाध्यायी सटीक १।।) गणरत्न महोदधि व्याकरण गणपाठ श्लोकबद्ध व्याख्या सहित १) धातुपाठ साधन सूत्रों सहित ।) वार्तिकपाठ सटीक सोदाहरण ।।) आरोग्यता पद्धति ।।) विशेष हाल बड़ा सूचीपत्र मंगाकर देखिये

पता—मैनेजर ब्रह्मप्रेस—इटावा सिटी